सायणनिर्मितानां बहूनां ग्रन्थानां पुष्पिकासु ग्रन्थाभिधानेभ्यः प्राक् 'माधवीये'ति पदं समुपन्यस्तं समुपलभ्यते। तथा च सायणरचिता धातुवृत्तिः माधवीयेत्याख्यया तत्पुस्तकेऽपि व्याहृता लोकेऽपि सर्वत्र विख्याता च दृश्यते। वेदार्थप्रकाशाभिधानमृग्वेदसंहिताभाष्यमपि माधवीयेति नाम्ना व्यपदिष्टमुपलभ्यते प्रत्यध्यायं पुष्पिकायाम्[१]। को नु खलु हेतुरस्य स्यात्? सायणेन विरचितानां ग्रन्थानां माधवीयेति समाख्यया सर्वत्र प्रचारे किं ग्रन्थकाराभिमतं समुचितं कारणं भवेत्? माधवेनैव विरचिता इमे ग्रन्था इति केचित्। माधवसायणाभ्यामुभाभ्यामपि विरचिता इत्यन्ये। परन्तु अनुपपत्तिहेतोर्नास्ति कस्मिन्नपि मते बद्धमूलाऽऽस्थाऽस्माकम्। तदा किमत्र उपपन्नं कारणं भविष्यति? वस्तुतस्तु सायणाचार्य एवैषां कर्ता इत्यत्र नास्ति कोऽपि सन्देहलेशस्तत्तद्ग्रन्थस्यारम्भावसानपरीक्षकाणां विदुषाम्। माधवेन प्रोत्साहित एव सायणो ग्रन्थानिमान् अरीरचत्। बुक्कमहीपतिना माधवाचार्य एव वेदभाष्याणामन्येषां च ग्रन्थानां निर्मितौ प्रार्थित आसीत् परन्तु माधवो नैव तत्प्रार्थनामुररीचकार। वेदभाष्यरचनार्थं प्रार्थितो माधवः राजानं प्रत्यभाषत–कृतिनामाद्यो ममानुजः सायणाचार्यो निखिलं शास्त्राणां वेत्ति, सर्वं जानाति। अतस्तमेव वेदानां व्याख्यातृत्वे नियोजयतु भवान्। माधवेनैव प्रत्युक्तो महीपतिः सायणाचार्यं वेदानां व्याख्याने नियुक्तवान्। अतोग्रन्थानाममीषां रचनायां माधव एव परमो हेतुः तस्य प्रोत्साहनैव आद्यं कारणम्। अतस्तदुपकारभाराक्रान्तहृदयो यदीमान् ग्रन्थान् माधवीयेति नाम्ना व्यपदिदेश सायणाचार्यः, तर्हि नितान्तमौचित्यमेव साक्षात्कुर्मः। न काचन औचित्यहानिरस्मिन् विषयेऽस्माकं मतेन परिपतति। अतः सायणेन विरचितानामपि पुस्तकानां माधवीयेति व्यपदेशो नितरां समुचित एवेति पश्यामः। तदत्र प्रमाणतया केचन ग्रन्थस्था एव श्लोकाः समुपन्यस्यन्ते।

पुरुषार्थसुधानिधौ—

तं सर्वविद्यानिलयं तत्त्वविद् बुक्कभूपतिः।
सत्कथाकौतुकी हर्षादपृच्छत् राजशेखरम्॥
श्रुतानि त्वन्मुखादेव शास्त्राणि विविधानि च।
पुराणोपपुराणानि भारतं च महामते॥

---

१. इति श्रीमद्राजाधिराजपरमेश्वर-वैदिकमार्गप्रवर्तक-श्रीवीरबुक्कसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये प्रथमाष्टके प्रथमोऽध्यायः॥

सर्वाण्येतानि विप्रेन्द्र गहनान्यल्पमेधसाम् ।
तस्मादाख्यानरूपाणि सुखोपायानि सुव्रत ।
पुरुषार्थोपयोगीनि व्यासवाक्यानि मे वद ॥
तस्य तद्वचनं श्रुत्वा युक्तार्थं बुक्कभूपतेः ।
प्रशस्य तं मुदा युक्तो माधवः प्रत्यभाषत ॥
अयं हि कृतिनामाद्यः सायणार्यो ममानुजः ।
पुराणोपपुराणेषु पुरुषार्थोपयोगिनीः ।
उपदिष्टा मया राजन् कथास्ते कथयिष्यति ॥
इति प्रसाद्य राजानं सायणार्यमुदैक्षत ॥
सायणार्योऽग्रजेनोक्तः प्राह बुक्कमहीपतिम् ।
साधु साधु महाप्राज्ञ ! बुद्धिस्ते धर्मदर्शिनी ॥
वदामि व्यासवाक्यानि लोकानां हितकाम्यया ।

तैत्तिरीयसंहिताभाष्ये—

तत्कटाक्षेण तद्रूपं दधत् बुक्कमहीपतिः ।
आदिशन्माधवाचार्यं वेदार्थस्य प्रकाशने ॥
स प्राह नृपतिं राजन् सायणार्यो ममानुजः ।
सर्वं वेत्त्येष वेदानां व्याख्यातृत्वे नियुज्यताम् ॥
इत्युक्तो माधवार्येण वीरबुक्कमहीपतिः ।
अन्वशात् सायणाचार्यं वेदार्थस्य प्रकाशने ॥
ये पूर्वोत्तरमीमांसे ते व्याख्यायातिसङ्ग्रहात् ।
कृपालुः सायणाचार्यो वेदार्थं वक्तुमुद्यतः ॥

## वेदभाष्याणां पौर्वापर्यपरीक्षणम्

सायणनिर्मितानां संहितापञ्चकभाष्याणां पौर्वापर्यं साम्प्रतं परीक्षयामः । सायणः कृष्णयजुर्वेदीयतैत्तिरीयसंहिताध्यायी ब्राह्मणो बभूव । अतः स्वीयत्वादतिपरिचितत्वाच्च तैत्तिरीयसंहितायाः प्रथमं व्याख्यानं युज्यत एव । अन्योऽपि हेतुरत्र विलसति । अभ्यर्हितत्वेऽपि ऋग्वेदस्य 'यज्ञस्य मात्रां विमिमीत उ त्वः' इति मन्त्रेण, 'यजुर्यजतेः' इति यास्ककृतनिर्वचनेन च अध्वर्युवेदस्य

यागनिष्पादकत्वं द्योत्यते। 'एवं सति अध्वर्युसंबन्धिनि यजुर्वेदे निष्पन्नं यज्ञशरीरमुपजीव्य तदपेक्षितौ स्तोत्रशास्त्ररूपौ अवयवौ इतरेण वेदद्वयेन पूर्यते इत्युपजीव्यस्य यजुर्वेदस्य प्रथमतो व्याख्यानं युक्तम्'[1] यजुर्वेदोऽपि कृष्ण-शुक्लभेदेन द्विविधिम्। तत्र कृष्णयजुर्वेदस्य बह्वीष्वपि शाखासु तैत्तिरीयैव शाखा स्वीया ग्रन्थकर्तुरभूत्। अतः स्वकीयत्वेन तस्याः प्रथमतो विरचितं सायणेन व्याख्यानमिति हेतोस्तैत्तिरीयसंहिताभाष्यस्यैव भूमिका प्रथमतो-ऽस्माभिर्ग्रन्थेऽस्मिन् निबद्धा।

अस्या अनन्तरं ऋग्वेदस्य व्याख्यानं विहितं ग्रन्थकर्त्रा। यजुर्वेदभाष्यात् ऋग्भाष्यस्याऽऽनन्तर्यं स्वयमेव सायणो निगदति—

आध्वर्यवस्य यज्ञेषु प्राधान्याद् व्याकृतः पुरा।
यजुर्वेदोऽथ हौत्रार्थमृग्वेदो व्याकरिष्यते॥

यजुर्वेदेन निष्पन्नं यज्ञशरीरमुपजीव्य तदपेक्षितौ स्तोत्रशास्त्ररूपौ अवयवौ इतरेण ऋक्-साम-वेदद्वयेन पूर्यते इति पूर्वमेवोक्तम्। तत्र सामानि ऋगा-श्रितानि भवन्ति। अतः साम्नामृगाश्रितत्वात् उभयोर्मध्ये प्रथमतः ऋग्व्या-ख्यानं युक्तमिति तैत्तिरीयव्याख्यानान्तरमृग्व्याख्यानं सायणोऽरीरचत्। ऋग्व्याख्यानात्परं तदाश्रितं सामवेदं व्याकरोत् सायणः। तथा च साम-भाष्यावतरणिकायां[2]—

यज्ञं यजुभिरध्वर्युर्निर्मिमीते ततो यजुः।
व्याख्यातं प्रथमं पश्चादृचां व्याख्यानमीरितम्॥ १०॥
साम्नामृगाश्रितत्वेन सामव्याख्याऽथ वर्ण्यते।
अनुतिष्ठासुजिज्ञासावशाद् व्याख्याक्रमो ह्ययम्॥ ११॥

सामवेदभाष्यादनन्तरं काण्वसंहिताऽनुक्रमेण व्याख्याता। कृष्णयजुर्वेदः प्रागेव व्याख्यातः। अवशिष्टस्य शुक्लयजुर्वेदस्य समायातो व्याख्यानसमयः। तस्य संहिताद्वयी विलसति—एका माध्यन्दिनी संहिता, अपरा काण्वसंहिता। माध्यन्दिनीं संहितां तु सायणात् वर्षशतत्रयं प्रागेव भोजे राज्यं प्रशासति आनन्दपुरवास्तव्यो वेदार्थविवृतिविचक्षण आचार्य उव्वटो निपुणं व्यकार्षीत्[3]।

१. दृश्यतां ग्रन्थस्यास्य १४ पृष्ठम्।

२. ग्रन्थस्यास्य ६३ पृष्ठे।

३. आनन्दपुर-वास्तव्य-वज्रटाख्यस्य सूनुना। मन्त्रभाष्यमिदं क्लृप्तं भोजे पृथ्वीं प्रशासति॥

अतः परिशेषात् काण्वसंहितायाः व्याख्यानं यजुर्वेदादिसंहिताव्याख्यानात् परं सायणो निर्मितवान्[1]।

अथर्ववेदभाष्यस्य तु सर्वेषां संहिताभाष्याणां समवसाने निर्मितिर्विहिता ग्रन्थकर्त्रेति सायणस्य वचनमिदं[2] प्रमाणत्वेन समुपन्यस्य परीक्षादस्मात् विरमामः।

व्याख्याय वेदत्रितयमामुष्मिकफलप्रदम्।
ऐहिकामुष्मिकफलं चतुर्थं व्याचिकीर्षति ॥ १० ॥

## ब्राह्मणानां भाष्याणि

न खलु संहिताभाष्याण्येव केवलानि विरचितानि वेदार्थप्रतिपादनपरेण श्रीमता सायणार्येण, यावत् ब्राह्मणानामपि केषांचित् प्रसिद्धानां व्याख्यानान्यपि निबद्धानि। तत्र प्रथमं भाष्यकारस्तैत्तिरीयसंहिताया व्याख्यानावसाने तत्सम्बद्धं तैत्तिरीयब्राह्मणं तैत्तिरीयमारण्यकं च व्याख्यातवान्। ऋग्वेद-व्याख्यानात् पूर्वमेवानयोर्व्याख्यानमरीरचदित्यस्माकं विश्वासः। स्वयमेव सायणस्तैत्तिरीयसंहिताव्याख्यानाऽऽनन्तर्यमनयोः प्रदर्शयति—

व्याख्याता सुखबोधाय तैत्तिरीयकसंहिता।
तद्ब्राह्मणं व्याकरिष्ये सुखेनार्थविबुद्धये ॥

× × ×

व्याख्याता सुखबोधार्थं तैत्तिरीयकसंहिता।
तद्ब्राह्मणं च व्याख्यातं शिष्टमारण्यकं ततः ॥

× × ×

ऋग्भाष्यानन्तरमेव तदीयं ब्राह्मणमैतरेयं ग्रन्थकृत् विवृतवान्। तथा च सामभाष्यात् परं क्रमौचित्यात् तदीयानां सर्वेषामेव ब्राह्मणानां प्राप्तावसरतया व्याख्यानं निरमिमीत माधवानुजः सायणः। अष्टौ ब्राह्मणाः सामवेदस्येति विदितचरमेव वैदिकानाम्। तेष्वष्टमस्य ब्राह्मणस्य वंशाख्यस्य व्याख्यानोपक्रमे वेदत्रयभाष्याऽऽनन्तर्यं तेषां ग्रन्थकृदेव स्वीयैरक्षरैः प्रतिपादयति[3]।

---

१. ग्रन्थस्य १०३ पृष्ठं द्रष्टव्यम्।

२. अस्य ग्रन्थस्य ११९ पृष्ठे।

३. व्याख्यातावृग्यजुर्वेदौ सामवेदोऽपि संहिता।
व्याख्याता ब्राह्मणस्याथ व्याख्यानं सम्प्रवर्तते ॥

सामब्राह्मणेष्वपि व्याख्याक्रमः प्रकारमेतमनुसरति । प्रथमं ( १ ) पञ्चविंशत्यपरनामधेयस्य ताण्ड्यब्राह्मणस्य व्याख्यानं, ततः ( २ ) षड्विंशस्य, ( ३ ) सामविधानस्य, ( ४ ) आर्षेयस्य, ( ५ ) देवताध्यायस्य, ( ६ ) उपनिषदाख्यस्य, ( ७ ) संहितोपनिषदिति ख्यातस्य ब्राह्मणस्य स्वल्पाक्षराणि भाष्याणि अनेनैव क्रमेण निर्मितानि सायणाचार्यैः । अन्ते च ( ८ ) वंशब्राह्मणस्यापि विरचितं व्याख्यानं जगतामुपकाराय[1] । सर्वाण्येवैतानि, बुक्कमहीपतौ शासति महीं, सायणाचार्येण निर्मितिविषयं नीतानीति तत्तत्पुष्पिकाभ्यः स्फुटमेव प्रतीयते ।

समवसाने च सर्वेषां ब्राह्मणव्याख्यानानां शुक्लयजुर्वेदीयस्य शतपथब्राह्मणस्य व्याख्यामपि बुक्कमहीपतिसूनोर्वैदिकमार्गप्रवर्तकस्य श्रीमहाराजहरिहरस्यानुज्ञामनुसृत्य सायणार्यो व्यरीरचदिति शतपथभाष्यस्योपोद्घात् निपुणमवगन्तुं शक्यते । इत्थमिमानि वेदानां रहस्यप्रतिपादकानि ग्रन्थरत्नानि जगतां कल्याणाय वैदिकधर्मस्याभ्युदयाय च श्रीमता सायणाचार्येण प्रणीतानीत्यहो तस्य लोकोपकारपरं चेतः ! गम्भीरार्थप्रकटनपरं च प्रकृष्टं पाण्डित्यम् ।

## वेदभाष्याणामेककर्तृत्वम्

सं० १४४३ ( ई० १३८६ ) वैक्रमाब्दे विरचिते एकस्मिन् शिलालेखे दृश्यते यत् श्रीमता वैदिकमार्गप्रतिष्ठापकेन धर्मब्रह्माध्वन्येन महाराजाधिराज-श्रीहरिहरेण विद्यारण्य-श्रीपादस्वामिनां समक्षमेवाग्रहारदानादिना पुरस्कृताः केऽपि वाजपेयाजी नारायणः, सोमयाजी नरहरिः, दीक्षितः पण्डरिश्चेति त्रयो ब्राह्मणाः चतुर्वेदभाष्यप्रवर्तका इत्यभिहिताः सन्ति । प्रवर्तकत्वं हि खलु कस्मिंश्चन कार्यविशेषे साहाय्यप्रदानं नाम । अतो भाष्यप्रवर्तका एते त्रयोऽपि विद्वद्वराः सायणाचार्यस्य वेदभाष्यप्रणयने सहायका एवाभवन्निति शिलालेखप्रामाण्यात् वदतीतिहासपरिशीलनपटुः आर. नरसिंहाचार्यमहाशयः[2] । अन्यच्च ऋग्वेदभाष्ये एकस्यैव शब्दस्य विभिन्नाष्टकभाष्येषु समुपलभ्यमानस्य दृश्यते मिथो विरुद्धः कोऽपि भिन्नोऽर्थः । अभिन्नत्वेनाभिमतस्यापि मन्त्रस्य

---

१. प्रौढानि ब्राह्मणान्यादौ सप्त व्याख्याय चान्तिमम् ।
वंशाख्यं ब्राह्मणं विद्वान् सायणो व्याचिकीर्षति ॥

२. इण्डियन ऐण्टिक्वेरी ( व० १९१६ ) १९ पृष्ठ

गोचरीक्रियते विभिन्नं विपर्ययबहुलं च समुपनिर्दिष्टं तात्पर्यम्। नहि तत् भाष्यकर्तुरेकत्वे सति कदापि सम्भावनामेति। कः खलु सचेतास्तस्यैव शब्दस्य एकस्मिन्नेव ग्रन्थे भिन्नं तात्पर्थं समुल्लिखति। भिन्नकर्तृत्वं हि तत्र समुचितं कारणं भवितुमर्हतीति कतिपयोदाहरणप्रदर्शनपुरःसरं साधयितुं सिद्धान्तमिमं प्रयतते डाक्टर गुणे महोदय.[1] । श्रीसायणाचार्याः विजयनगराधिपमन्त्रिप्रवराः बभूवुरिति पूर्वमेवोक्तमस्माभिः । अतः विपुलभाष्यविरचनकर्मणि यदि केचित् पण्डिताः सहायकत्वेन नियुक्ता अभूवन् तर्हि न काप्यसम्भवनाऽस्माभिः प्रत्यक्षीक्रियते। भवतु नाम केषाञ्चिदन्येषामपि तत्र महत्त्वपूर्णे कर्मणि प्रवर्तना, तेनाऽस्माकं न कापि सिद्धान्तहानिर्भवितुमर्हति । निखिलान्यपि भाष्याण्यभिन्नैकतात्पर्येण समुचितैकार्थेन चानुस्यूतानि विद्यन्ते इति विमर्शकानां नो परोक्षमिति निर्भयं निगदितुं पारयामो वयम्। अत एनेषां सर्वेषां संहिताभाष्याणां ब्राह्मणव्याख्यानानां च कर्तृत्वमेकस्मिन्नेव निखिलशास्त्रसिद्धान्तपारंगमे तत्रभवति श्रीसायणाचार्ये निपुणं पर्यवस्यतीति वदन्तो वयं न कामपि विप्रतिपत्तिं साक्षात्कुर्मः।



## वेदानामध्ययनप्रकारः

अथ श्रीसायणाचार्याणां जीवनवृत्तं ग्रन्थविरचनं च सप्रमाणं विस्तरशो निरूप्य तद्विरचितानां व्याख्यानानां साम्प्रतं महात्म्यपर्यालोकनं वयं सुसाम्प्रतं प्रतीमः। तदधुना भारते वर्षे त्रिविधरूपेण वेदानां पठनं पाठनं च प्रवर्तते। प्रथमे वेदानामध्येतारस्ते सन्ति, ये खलु प्राचीनपरम्परानिर्वाहका वैदिका इत्यधुना लोकैरभिधीयन्ते। एते खलु विपुलायासेन समग्रां स्वीयां संहितां स्वकण्ठस्थितां विधाय, वैदिकमन्त्राणां शुद्धोच्चारणं ज्ञात्वा, वेदानां प्रचुरप्रचाराय सर्वदा प्रयतन्ते इति ते सर्वेषां वेदानुशीलनजुषां पुरुषाणां धन्यवादानर्हन्ति। तेषामेव मुखे भगवन्तो वेदास्तिष्ठन्ति, इति कथने न विद्यते काचन विप्रतिपत्तिः। विहाय सर्वाणि कार्याणि, उररीकृत्य विपुलं सर्वाश्चर्यकरं परिश्रमं, स्वीकृत्य च निष्किञ्चनां काञ्चन माधुकरीं वृत्तिं, समधिकेन मनोयोगेन, आदरणीयेन चानुरागेण एते सततं वेदानधीयते अध्यापयन्ति च निजान्

१. आशुतोष जुबिली कमेमोरेशन वाल्यूम ( अन्तिम भाग ) पृ० ४६७–४७६।

विद्यार्थिन इति कः खलु अमीषामुपकारभारं निपुणं निगदितुं शक्नुयात् । अहो न किमिदमाश्चर्यकरं यत् यथा वेदाः पूर्वैः ऋषिभिः सारस्वततीरमुपाश्रयद्भि- रुदात्तादिस्वरपरिशुद्धिपूर्वकं निष्कामभावेनाधीयन्ते स्म, तथैव साम्प्रतमपि अकालदावानलवत् प्राचीनशास्त्राध्ययनपद्धतिं दहति वैदेशिके पाश्चात्यशिक्षणो- त्कर्षे, निजं परिचितं धर्मं च त्यजति आङ्ग्लशिक्षामण्डिते भारतीये जने, स्वीयोदरपूरणाय च सकलमपि सदाचारं निखिलामपि नीतिमुत्क्रम्याचरण- विरहिते प्रजावर्गे, एते एव विपुलं परिश्रमं स्वीकृत्य शुद्धोच्चारणविधिना वेदान- धीयते । एतेषामेव मुखेभ्यः शब्दप्रधानानां वेदानां वास्तविकं परिशुद्धमुच्चारणं श्रोतुं पार्यते । अत एते एव वेदानां संरक्षकाः, अमी एव श्रुतीनां धारकाः साम्प्रतं जगति, इति वदतो नितरां प्रसीदति ममान्तरात्मा । परन्तु इमे वैदिका मन्त्रोच्चारणमात्रपरायणा वेदानां न सन्ति अर्थज्ञा इति नितरां परितापस्थानम् । तैरुच्चार्यमाणा मन्त्राः कमर्थमभिदधति किं रहस्यं वा प्रति- पादयन्ति इति बहुधा न जानन्त्यनेके व्याकरणादिशास्त्रविमुखा वैदिका इति सपरिखेदमावेदयामः ।

## वेदानां नव्यार्थमीमांसाप्रकारः

कैरपि समाजविशेषानुरागमादधानैर्वेदानां विधीयतेऽध्ययनं सह परिश्रमेण, साकमायासेन च बहुलेन साम्प्रतं भारतेऽस्मिन् वर्षे । समुचिते मन्त्राणाम- ध्ययने शिथिलादरा अप्यमी वेदार्थपरिशीलने कमपि प्रयत्नमादधानाः सततं दृश्यन्ते । परन्तु नितान्तं तान्तमस्माकं चेतो यदिमेऽन्यमतावलम्बिभिः साकं धार्मिकविवादेष्वेवोपयोगाय कतिपयानां मन्त्राणामेवार्थविचारणपरा बहुधाः साक्षात् क्रियन्ते । तानपि च प्रायशोऽविचारितोच्चारणविधिना मन्त्रोच्चारणं कुर्वन्तः सततं कदर्थयन्ति । अतो निखिलमपि तत्समाजकार्यं जातं वेदायत्त- मेवेति वदन्तोऽप्येते न खलु वेदानां समुचितरक्षणाय मन्त्राणां च पारम्पर्य- विधया परिशुद्धोच्चारणे बद्धपरिकरा अवलोक्यन्ते । एभिर्विद्वज्जनैरयमर्थविषये विद्यते प्रवर्तिता एका रीतिरपि या तद्भक्तैः सादरं स्वीकृता समुपलभ्यते । 'आध्यात्मिकपक्षमुररीकृत्यैव वेदानामर्थविचारः समुचितः' इति तदीयं मतम् । मतमिदं नाऽपूर्वम् । पूर्वैरपि निरुक्तकारादिभिः स्वस्वग्रन्थेषु मतस्यास्य प्रति- पादनात् । यास्केन स्फुटमेव वेदार्थपरिशीलनविधौ प्रतिपादिते मतत्रये आध्या- त्मिकपक्षोऽन्यतरः । आरण्यकोपनिषदादिषु आध्यात्मिकं पक्षमुररीकृत्य मन्त्राणां केषांचित् व्याख्यानं समुपलभ्यते एव, परन्तु ब्राह्मणग्रन्थानां संहितावद् प्रामा-

ण्यमनङ्गीकुर्वन्तस्ते न खलु परिशीलयन्ति तद्ब्राह्मणग्रन्थेषूपलभ्यमानामाध्यात्मिकीं सरणिं गूढार्थसम्पन्नानां वेदानां समुचिते व्याख्याने। रहस्यचयमण्डिता भगवती श्रुतिरनयैव सरण्या स्वार्थं प्रकाशयति शास्त्रसिद्धान्तजुषां विदुषां नान्यथा कयाचनेति कथनमपि नैव समीचीनं, विविधार्थप्रतिपादकत्वात् तस्याः। अपरं चामी वेदेषु नवीनानामपि आधुनिकैः पाश्चात्यविज्ञानवेदिभिः प्राकाश्यं नीतानामाविष्काराणां धूम्रयान-वायुयान-तडिच्छकटस्वनग्राह्यादीनां नैव कल्पितां सम्भावनां, अपितु वास्तविकीं सत्तां वेदे मन्यन्ते। सर्वेषामाविष्कृतानां आविष्करिष्यमाणानां च विज्ञानतत्त्वानामाकरो वेद एवेति तेषामभिमतं मतमिवावलोक्यते। एतत्सिद्धान्तमनुसरद्भिस्तैस्तथैव वेदा व्याख्याता यथा वैज्ञानिकानामाविष्काराणां तत्र स्थितिः कयापि रीत्या प्रतिपाद्येत। परन्तु एषोऽपि सिद्धान्तो नैव विद्वज्जनमनोरमः। रीतिरप्येषा नैव हृद्या वेदशास्त्ररहस्यवेदिनां मनीषिणाम्। इत्थमेतत्प्रदर्शितदिशा नैव श्रुतीनां सारभूतो निगूढतत्त्वप्रतिपादकोऽर्थो ज्ञातुं पार्यते कात्स्न्येन केनापि। एभिः प्रतिपादिता मन्त्रार्था आध्यात्मिकाभासपदवीमेव भजन्ते। अतो वेदार्थतत्त्वजिज्ञासूनामुपकाराभावादुपेक्ष्यैव वेदार्थप्रतिपादनविधौ रीतिरेषामिति विदुषां विश्वासः।

## पाश्चात्यानां वेदार्थानुशीलनम्

साम्प्रतं भारतवर्षाद् बहिरपि पाश्चात्येषु देशेषु अमेरिकायूरोपादिषु देववाणीशिक्षणपराणां विदुषां मध्ये श्रूयते वेदानां भूयसा प्रचार इति। प्राचीनधर्मतत्त्वजिज्ञासयाऽऽपूर्यमाणान्तःकरणास्ते स्पृहयालवो दृश्यन्ते वेदानां सिद्धान्तपरिज्ञानाय। कौतुकाक्रान्तचेतसोऽपि केचन विपश्चितो वेदानधीयते अध्यापयन्ति च स्वदेशीयान् वैदेशिकाँश्च छात्रान्। शर्मण्यदेशे वेदानामित्थं गोचरीक्रियते भूयान् अध्ययनक्रमः, लक्ष्यीक्रियते च प्राकाश्यं नीतो विपुलो वेदसम्बद्धो ग्रन्थनिचयः। एतेषां वैदेशिकानामवलोक्य भारतीयानां भाषाविषये धर्मविषये च नितान्तं प्रगाढमनुरागमाश्चर्यचकितैरेव भूयतेऽस्माभिः। क्व सन्तीमे दूरतरदेशवासिनोऽपि वेदचिन्तनपराः, क्व च वयमार्यावर्तीयाः स्वधर्मस्पृहयालवोऽपि संस्कृतभाषाभिमानवन्तोऽपि वेदार्थानुशीलनविमुखाः। वेदानुशीलनं हि नाम भारतीयानां प्रथमं कर्तव्यम्। परन्तु तदुपेक्षावद्भिः स्वधर्मग्रन्थसंरक्षणविधौ शिथिलादरैरस्माभिः कथं स्वदेशस्य, स्वभाषायाः, स्वधर्मस्य च वास्तविकी अभ्युन्नतिः करणीया स्यादिति चिन्तनं नितरां दुनोति सचेतसां चिन्ताक्रान्तानि चेतांसि। अस्तु।

एते पाश्चात्याः 'मन्त्रो हीनः स्वरतो: वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह' इति स्वरमाहात्म्यावगच्छन्तोऽपि वेदमन्त्राणां शब्दप्राधान्यमवजानन्तः स्वीयेन विकृतोच्चारणेन तानहो कदर्थयन्ति। अन्यैव काचन रीतिः वेदानामर्थविचारणविषये तैरुररीक्रियते यां 'हिस्टारिकल मेथड' (Historical Method) ऐतिहासिकपद्धतीति नाम्ना तदनुयायिनो निपुणं व्यपदिशन्ति। पारसीकमिस्रादिदेशानां धर्मपर्यालोचनया, भाषाविज्ञानस्य पारस्परिकतारतम्यपरीक्षया वेदानामर्थः समुल्लसति इति पाश्चात्यानां विश्वासः। एनामेवावलम्ब्य रीतिं ते सततं वेदानामर्थप्रतिपादनपरा विलोक्यन्ते। न जाने केन हेतुना श्रीमतां सायणाचार्याणां भाष्यानुशीलनवशात् वेदार्थे कथमपि लब्धप्रवेशा अपीमे गर्हयन्ति तत्रभवतो भाष्यकारान्, अवगणयन्ति च तद्भाष्यप्रतिपादितानर्थजातान् वेदमन्त्राणाम्। अपरं च तेषामपि पाश्चात्यानां वेदार्थानुध्याननिरतानां नैव वैदिकशब्दानामर्थविषये ऐक्यमतमुपगच्छामः यदि शर्मण्यदेशीयो लुड्विग् महोदयो मन्त्रस्य कस्यचित् कमप्यर्थं वदति, तर्हि तद्देशीय एव ग्रासमानः अन्यमेवाऽपूर्वमर्थं प्रतिपादयति। इत्थं मोक्षमूलरभट्टमुग्धानलाचार्योतिनाम्नां तद्देशीयानां पण्डितानां वेदस्यार्थपरीक्षणं नैव जातुचिदेकरूपतां धत्ते। एकस्यैव शब्दस्य विभिन्नार्थप्रतिपादनपरा अप्येते स्थानमाहात्म्यात् सन्दर्भानुरोधाच्च भिन्नमर्थं प्रतिपादयतः श्रीमतो भाष्यकारान् कथं दूषयन्तीति निपुणं निभालयन्तोऽपि वयं नैव तत्र वाचोयुक्तौ किमप्यौचित्यं हेतुं वा स्फुटतरं साक्षात्कुर्मः। वैदिकग्रन्थानां प्रकाशने तेषामुत्साहं परिश्रमं च प्रशंसन्तोऽपि, वेदसिद्धान्तविषये तेषामनास्थाकरीं व्याख्यापद्धतिं चावलोकयन्तो, वयं दूयमानेन चेतसा, व्यथमानेन हृदयेन, सविषादमावेदयामो यदेभिः भारतीयसंस्कृतेः परमसुहृद्भिर्वेदानामभ्युदयस्थाने महानेव कोऽपि वेदविप्लवः साम्प्रतं प्रवर्तितो दृश्यतेऽरुन्तुदो भारतीयानां वेदाभिमानिनां पण्डितानाम्। प्रायः सर्वेऽपि पाश्चात्यशिक्षामण्डिता भारतीया एतेषामेव स्वगुरूणां पाश्चात्यानां सरणिमनुसरन्तोऽवलोक्यन्ते इति तु नितरां परिखेदस्थानम्। अहो अस्माकं मानसिकं दैन्यम्। अहो अस्माकीना मनसो दास्यवृत्तिः। उपचयं गच्छति च पारस्परिके वेदरहस्यार्थचिन्तनेऽनैकमत्ये, भगवत्याः श्रुतेः भूतार्थपरिज्ञानाय निगूढतत्वावधानाय च कं खलु शरणं व्रजेम, कः खल्वस्माकं परमः आश्रयो भवेत्। को ह्युपायः स्यात् किमालम्बनञ्च भवेत् यत् समाश्रित्य वयं अनायासेन लघुनोपायेन वेदार्थाम्बुनिधिं सुखेन सन्तरेम। सर्वत्रोपायार्थं निपुणं निभालयतामस्माकं पुरतः केवलो ह्युपायो विलसति। स तु तत्रभवतां श्री-

सायणाचार्याणां वेदभाष्यमेव। विहाय तन्नैव कश्चिदन्यः समाश्रयोऽस्माकं दृष्टिपथमवतरति।

## वेदत्वविचारः

अथ स्वतःप्रामाण्येन विलसन्तो भगवन्तो वेदाः सन्ति भारतीयानामस्माकं धर्मस्य सर्वस्वभूता इति केषां नापरोक्षं विदुषाम्। तत्र वेदत्वं नाम शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वे सति शब्दजन्यवाक्यार्थज्ञानाजन्यप्रमाणशब्दत्वमिति तत्वचिन्तामण्यादिषु न्यायविदो वदन्ति। 'इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेदः' इति तैत्तिरीयसंहिताभाष्यभूमिकायां सायणाचार्याः समामनन्ति। वेदत्वं खलु अलौकिकोपायबोधकत्वं नाम। ज्योतिष्टोमादिरिष्टप्राप्तिहेतुः कलञ्जभक्षणवर्जनादिरनिष्टपरिहारहेतुरित्यर्थः किमनुमानसहस्रेणापि तार्किकशिरोमणिनाप्यवगन्तुं पार्यते? वेदा एवैषां लोकोत्तरोपायानां केवलं बोधकाः। अत एवोक्तमाचार्यैः—

> प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।
> एतं विदन्ति वेदेन तस्मात् वेदस्य वेदता॥

## वेदानां प्राचीनभाष्याणि

इत्थं जगतां कल्याणपरम्परासिद्धये आविर्भूतानामलौकिकोपायप्रतिपादकानां वेदानां सर्वत्र प्रख्यातान्यासन् प्रौढानि व्याख्यानानि प्राचीनकालेऽस्मिन् भारते वर्षे। निगूणार्थानां वैदिकानां शब्दानामेव कृते कैश्चाचार्यैः निबद्धा ग्रन्था निघण्टवो नाम। तेषां व्याख्याभूतं साम्प्रतं पाश्चात्यदेशेषु सविशेषमधीयमानस्य सकलस्य भाषाविज्ञानस्य मूलभूतं ग्रन्थरत्नं महर्षिणा **यास्काचार्येण** प्रणीतं निरुक्ताख्यं वेदस्यार्थविचारणायां प्राधान्यं प्राथम्यं च दधदिवाधुनापि समुपलभ्यमानं विराजतेतराम्। तत्र प्रदर्शिता वेदार्थतत्त्वपरिशीलनपद्धतिरेव ज्यायसीति विषये को नाम विपश्चित् सन्देहदोलायमानमानचेता भवति यास्कनिर्दिष्टां शैलीमनुसृत्यैव भूयसा **स्कन्दस्वाम्यादिभिर**नेकैराचार्यैः **ऋग्वेदस्य**, **उव्वटाचार्या**दिभिः शुक्लयजुर्वेदस्य, **भवस्वामि-गुह**-**वादिभिस्तैत्तिरीयसंहितायाः**, **माधव-भरतस्वाम्यादिभिः** सामवेदस्य च प्रामाणिकानि व्याख्यानानि सायणात् प्रागेव विरचितान्यासन्। एतेषां मध्येऽनेकेषां व्याख्यातॄणां सायणभाष्येषु नामान्येवोपलभ्यन्ते न तद्रचितानि समग्राणि व्याख्यानानि। **स्कन्दस्वामि**रचितं ऋग्वेदभाष्यं **गुणविष्णुना**

निबद्धं कतिपयसामवेदीयमन्त्राणां व्याख्यानमन्यानि च कानिचित् व्याख्यानानि साम्प्रतं मुद्रितानि मुद्र्यमाणानि च सन्ति, परन्तु विरलप्रचाराणि बहूनि नामशेषतां गतानीति निर्विवादम् ।

श्रीमता सायणाचार्येण विरचितं यत् वेदभाष्यं तदेव साम्प्रतमेकं कार्त्स्न्येनोपलभ्यते वेदार्थपरिचयाय जिज्ञासूनाम् । इत्थं वेदमन्त्राणां या खलु आसीत् पारम्पर्येणोपगता व्याख्यानपद्धतिः, तया रीत्यानिर्दिष्टा अर्था वेदभाष्ये एव जागरति । वेदानामर्थनिर्द्धारणे सायणो यास्काचार्यमेव बहुशोऽनुसरति । निरुक्ते निर्दिष्टानि प्रायः सर्वाण्येव व्याख्यानानि स्वभाष्यग्रन्थे नामनिर्देशपूर्वकंसमुद्धरति । एवं नाममात्रमुपगते निखिले वेदव्याख्यानवाङ्मये, सायणीयवेदभाष्यादेव वयं वेदमन्त्राणां तात्त्विकं प्राचीनाचार्याभिमतं च व्याख्यानमवगन्तुं पारयामः इति जागर्त्येव श्रीसायणभाष्याणां किमपि गौरवास्पदं माहात्म्यम्, विद्यते एव वेदानुशीलनवतां कृते तेषां प्रकामं साहाय्यकम् ।

## वेदार्थस्यानुशीलनपद्धतिः

वेदानुशीलनं हि नाम भारतीयानां विद्वज्जनानां प्रथमं कर्तव्यम् । वेदानामर्थज्ञानाय सततमेव मनीषिभिर्यतितव्यम् । वेदानां ते एव अर्थाः समुचिताः, ये पूर्वाचार्यकृतां परम्परानुसरन्ति । निरुक्ते परम्परायास्तस्याः स्थितिं वयमवलोकयामः । तत्रत्यानि व्याख्यानानि प्रमाणरूपतां भजन्ते इति निर्विवादम् । तानि खलु व्याख्यानानि न खलु निरुक्तकारप्रदर्शितां काल्पनिकतामेवानुरुन्धन्ति, अपितु तानि ब्राह्मणग्रन्थेष्वेवावलम्बितानि स्वप्रामाण्याय इति तत्तद्ग्रन्थेषु बहुशब्दानामर्थपरीक्षणात् स्फुटं भविष्यति । परम्पराविरहितो वेदार्थो न खलु कदापि विद्वज्जनैरनुसन्धेयः । "नह्यस्माकं वेदः शाकुन्तलं नाम नाटकं, येन तस्य महाबुद्धिमता बलवत्प्रयत्नशालिनापि दिव्यज्ञानं विनैव क्रियमाणं व्याख्यानं विश्वासार्हं स्यात्, प्रवर्तयेद् निवर्तयेद्वा प्रेक्षावतः । धर्माधर्माद्यतीन्द्रियेषु वस्तुषु केवलमार्षं विज्ञानमेव व्याचक्षाणस्य प्रामाण्ये उपयुज्यते, न पुनर्बुद्धिपरिश्रममात्रम्" इति साधु प्रतिपादयन्ति श्रद्धेयाः श्रीबालशास्त्रिचरणाः । अन्यच्च वेदार्थोपबृंहणमितिहासपुराणादीनां साहाय्येनैवौचित्येन कर्तव्यमित्याचार्याणामुपदेशः । तथा च स्मर्यते—

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत ।
बिभेत्यल्पश्रुतात् वेदो मामयं प्रतरिष्यति ॥

## सायणभाष्याणां माहात्म्यम्

भारतीयानामितिहासं दूषयन्तः पुराणं चानर्थजल्पितमिति वदन्तः पुरुषा वेदानां कथं तात्त्विकमर्थं निश्चयेनावगन्तुं समर्था भवन्तीति न जानीमो वयम्। सायणाचार्यविरचितेषु भाष्येषु प्राचीनायाः परम्परायाः एव साधु संरक्षणं न केवलं समुपलभामहे, अपि तु पुराणेतिहासानुयायिप्राचीनाचार्यसम्मतं च व्याख्यानं मन्त्राणां निरीक्षामहे।

यथा—

न यातव इन्द्र जूजुवुर्नो न वन्दनाः शविष्ठ वेद्याभिः।
स शर्धदर्यो विषुणस्य जन्तोर्मा शिश्नदेवा अपिगुर्ऋतं नः॥

( ऋग्वेद ७।२१।५ )

इति मन्त्रे समुपलभ्यमानं 'शिश्नदेवाः' इति पदं यत् तुलनात्मकभाषाविज्ञानवेदिभिः पाश्चात्यैस्तद्भक्तैश्च भारतीयैः लिङ्गपूजापरकत्वेन व्याख्यायते तत्तु भारतीयशब्दार्थानुशीलनपरम्पराया अज्ञानविजृम्भितमिति विमर्शका निपुणमवगच्छन्तु। न ह्यत्र देवशब्दः इष्टदेवतामभिधत्ते, अपि तु यथा 'शिश्नोदरपरायणः' 'शिश्नोदरतृपः' इत्यादयः शब्दा आत्मम्भरिपुरुषवाचकतया प्रयुज्यन्ते लोके तथैव शब्दस्यास्यापि व्यवहारः प्रयोगश्च तस्मिन्नेवार्थे कृत इति परम्परानुशीलनात् ध्रुवं ज्ञातुं पारयामः। यास्कसायणाभ्यां तथैव अब्रह्मचर्यार्थकोऽयं व्याख्यातः।

अन्यच्च हिरण्यगर्भसूक्ते 'कस्मै देवाय हविषा विधेम' इत्यत्र किंशब्दस्य सायणेन प्रदर्शितः प्रजापतिरूपोऽर्थो ब्राह्मणपुराणादिसम्मत एव। शतपथब्राह्मणे किंशब्दः प्रजापतिरूपमर्थमभिधत्ते। ऐतरेयब्राह्मणस्य तृतीयपञ्चिकायां च एतद्विषयमाख्यानमपि समुपलभ्यते लोके पुराणादिषु सर्वत्र किंशब्दः प्रजापतौ वर्तते इति सायणाभिमतमर्थं परम्परासम्मतमपि मुधैव दूषयन्तः पाश्चात्यपण्डिता उपेक्ष्या एव। येषां खलु आधिभौतिकपक्षावलम्बनमूलकमेव सायणीयभाष्यविरचनमित्याक्षेपः किं ते न जानन्ति यत् स्थलेषु केषुचित् सायणाचार्या आधिदैविकाध्यात्मिकपक्षानुसारिणोऽप्यर्थान् स्वयं प्रकटीचक्रुः। आध्यात्मिकाद्यर्थविचारपरायणा आरण्यकानि निपुणं परिशीलयन्तु विचारयन्तु च तत्रार्थान् प्रदर्शितान् वेदमन्त्राणाम्। इत्थं प्राचीनपरम्परासम्मतत्वात् पुराणेतिहासानुयायित्वाच्च श्रीसायणभाष्याणामनुशीलनं विधेयं विद्वज्जनैः।

उपस्थिते सार्वत्रिके वेदार्थविप्लवे, उपचीयमाने पाश्चात्यवेदज्ञानां वेदार्थविषयकपारस्परिकेऽनैकमत्ये, अनुसरति च निर्विचारं पाश्चात्यां पद्धतिं भारतीये आङ्ग्लभाषामण्डिते विद्वज्जने, श्रीसायणाचार्या एवास्माकं वेद-तत्त्वजिज्ञासायां परमः समाश्रयः। स एवास्माकं परमा गतिरिति निश्चिन्वन्तो वयं प्रस्तावनामिमां समाप्तिं नयामः। अतो भाष्यमिदं सर्वदा सर्वथा च निखिलैर्वेदाभिमानिभिरखिलवेदसिद्धान्तपरिष्करणाय आलोचनाविषयं नेय-मित्यस्माकमाग्रहः। वेदार्थविचारणचणा विद्वज्जना निपुणमिदं निभालयन्तु इति तेषु कापि मदीयाऽभ्यर्थना। तुष्यतु मत्प्रयत्नेनानेन श्रीभगवान् कमला-पतिः, सफलयतु मदीयं स्वान्तस्तोषाय विहितं परिश्रममिमं, उन्मीलयतु च वेदार्थतत्त्वोन्मेषणाय ममान्तरं प्रातिभं चक्षुरिति ध्रुवमाशास्महे वयम्।

## कृतज्ञताप्रकाशः

अन्ते, येषां सन्मन्त्रणया ग्रन्थस्यास्य संशोधने प्रवृत्तोऽहमभवम्, येषां च वेदशास्त्रार्थानुशीलनपद्धत्या बहुशोऽहमुपकृतो जातः, तेषामेव विमलधिष-णानां प्रगल्भप्रतिभावतां सततं शास्त्रार्थचिन्तनजुषामग्रजकल्पानां **श्रीबटुक-नाथशर्मणां** महोपकारभारं कैः समुचितैः शब्दैः प्रकटयामि इति नूनं नैव जाने। यत्र हृदयं हृदयेन सह संवदति तत्र नास्त्येव कोऽप्यवकाशो भाषाया इति निवेदयति।

चैत्रशुक्ला प्रतिपद् १९९१
१६–३–३४
**हिन्दूविश्वविद्यालय,**
**काशी**

वेदविदां वशंवदः
**श्रीबलदेव उपाध्यायाः**

# ग्रन्थस्थविषयानुक्रमणिका

## ( १ )

## तैत्तिरीयसंहिताभाष्यभूमिकाया विषयानुक्रमणी



## ( २ )

## ऋग्वेदसंहिताभाष्यभूमिकाया विषयानुक्रमणिका

( ३ )

## सामवेदसंहिताभाष्यावतरणिकायाः विषयानुक्रमणी



( ४ )

## काण्वसंहिताभाष्यभूमिकाया विषयानुक्रमणी



( ५ )

## अथर्ववेदभाष्यभूमिकायाः विषयानुक्रमणी

[1]कृष्णयजुर्वेदान्तर्गतायाः

# तैत्तिरीयसंहिता:

सायणाचार्यकृता

## भाष्यभूमिका

—※—

[2]वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ २ ॥
यत्कटाक्षेण तद्रूपं दधद् बुक्कमहीपतिः ।

---

श्रीमङ्गलमूर्तये नमः ।

१. सम्प्रदायभेदात् शाखाबाहुल्यं वेदस्य । तथाह महाभाष्यकारः पस्पशाह्निके-'एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यम्, नवधाऽथर्वणो वेदः' इति, कृष्णशुक्लत्वभेदेन यजुर्वेदान्तर्गतशाखाशतस्य द्वैविध्यम् । तत्र

आध्वर्यवं क्वचित् हौत्रं क्वचिदित्यव्यवस्थया ।
बुद्धिमालिन्यहेतुत्वाद् यजुः कृष्णमितीर्यते ॥

कृष्णयजुर्वेदसंहिताया भाष्यं सर्वप्रथमं निबबन्ध तत्रभवान् सायणाचार्यः । यथोक्तं तेनैव ऋग्वेदभाष्योपक्रमणिकायाम्—

'आध्वर्यवस्य यज्ञेषु प्राधान्याद् व्याकृतः पुरा ।
यजुर्वेदोऽथ हौत्रार्थमृग्वेदो व्याकरिष्यते' ॥ इति

तैत्तिरीयशाखाध्यायित्वात् तस्य तस्या व्याकृतौ प्रथमा प्रवृत्तिरिति बोध्यम् ।

२. इतः पूर्वं केषुचित् पुस्तकेषु श्लोकपञ्चकमधिकं दृश्यते । तद् यथा—

गजवदनमचिन्त्यं तीक्ष्णदन्तं त्रिनेत्रं बृहदुदरविशेषं भूतराजं पुराणम् ।
अमरवरसुपूज्यं रक्तवर्णं सुरेशं पशुपतिसुतमीशं विघ्नराजं नमामि ॥ १ ॥
मूलाधारे चतुष्पत्रे पद्मकिंजल्कशोभिते ।
दाडिमीकुसुमप्रख्ये तरुणादित्यसन्निभे ॥ २ ॥
भगाख्ये कुण्डलीचक्रे पूजयेत् परमेश्वरीम् ।
अङ्कुशं चाक्षसूत्रं च पाशपुस्तकधारिणीम् ॥
मुक्ताहारसमायुक्तां देवीं ध्यायेच्चतुर्भुजाम् ॥ ३ ॥
कपिलसटमुदञ्चत्कर्णमग्नीन्द्विनाक्षं विवृतवदनविद्युज्जिह्वमुत्फुल्लनासम् ।
अरिदरकरयुग्मं योगपट्टाङ्गजानुस्थितकरमरुणाङ्घ्रिं श्रीनृसिंहं नतोऽस्मि ॥ ४ ॥
नमामि विष्णुं विधियज्ञरूपं सरस्वतीं चापि तदीयजिह्वाम् ।
त्रैविद्यवृद्धान् विदुषो गुरूंश्च बौधायनाचार्यपदद्वयं च ॥ ५ ॥

आदिशन्माधवाचार्यं वेदार्थस्य प्रकाशने ॥ ३ ॥
[1]स प्राह नृपतिं राजन् ! सायणार्यो ममानुजः ।
सर्वं वेत्त्येष वेदानां व्याख्यातृत्वे नियुज्यताम् ॥ ४ ॥
इत्युक्तो माधवार्येण वीरबुक्कमहीपतिः ।
अन्वशात् सायणाचार्यं वेदार्थस्य प्रकाशने ॥ ५ ॥
ये पूर्वोत्तरमीमांसे ते व्याख्यायातिसङ्ग्रहात् ।
कृपालुर्माधवाचार्यो वेदार्थं वक्तुमुद्यतः ॥ ६ ॥
ब्राह्मणं कल्पसूत्रे द्वे मीमांसा व्याकृतिं तथा ।
उदाहृत्याथ तैः सर्वैर्मन्त्रार्थः स्पष्टमीर्य्यते ॥ ७ ॥

ननु कोऽयं वेदो नाम, किं च तल्लक्षणम्, के वास्य विषयप्रयोजनसम्बन्धाधिकारिणः, कथं वा तस्य प्रामाण्यम् ? न खल्वेतस्मिन् सर्वस्मिन्नसति, वेदो व्याख्यानयोग्यो भवति । अत्रोच्यते । इष्टप्राप्त्यनिष्टपरिहारयोरलौकिमुपायं यो ग्रन्थो वेदयति स वेदः । अलौकिकपदेन प्रत्यक्षानुमाने व्यावर्त्त्येते । अनुभूयमानस्य स्रक्चन्दनवनितादेरिष्टप्राप्तिहेतुत्वं, औषधसेवादेरनिष्टपरिहारहेतुत्वञ्च प्रत्यक्षतः सिद्धम् । स्वेनानुभविष्यमाणस्य पुरुषान्तरगतस्य च तथात्वमनुमामगम्यम् । एवं तर्हि भाविजन्मगतसुखादिकमपि अनुमानगम्यमिति चेत्, न तद्विशेषस्यानवगमात् । न खलु ज्योतिष्टोमादिरिष्टप्राप्तिहेतुः कलञ्जभक्षणवर्जनादिरनिष्टपरिहारहेतुरित्यमुमर्थं वेदव्यतिरेकेणानुमानसहस्रेणापि तार्किकशिरोमणिरप्यवगन्तुं शक्नोति । तस्मादलौकिकोपायबोधको वेद इति लक्षणस्य नातिव्याप्तिः ।

अत एवोक्तम्—

'प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते ।
एतं विदन्ति वेदेन तस्माद्वेदस्य वेदता ॥' इति

**स एवोपायो वेदस्य** विषयः । तद्बोध एव प्रयोजनम् । तद्बोधार्थी च अधिकारी । तेन सह उपकार्योपकारकभावः सम्बन्धः । नन्वेवं सति स्त्रीशूद्रसहिताः सर्वे वेदाधिकारिणः स्युः, इष्टं मे स्यादनिष्टं मा भूदिति आशिषः सार्वजनीनत्वात् । मैवं, स्त्रीशूद्रयोः सत्युपाये बोधार्थित्वे हेत्वन्तरेण वेदाधिकारस्य प्रतिबद्धत्वात् । उपनीतस्यैवाध्ययनाधिकारं ब्रुवच्छास्त्रमनुपनीतयोः स्त्रीशूद्रयोर्वेदाध्ययनमनिष्टप्राप्तिहेतुरिति बोधयति । कथं तर्हि तयोस्तदुपायावगमः, पुराणादिभिरिति ब्रूमः ।

अत एवोक्तम्—

'स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ।
इति भारतमाख्यानं मुनिना कृपया कृतम्' ॥ (भागवत १।४।२५) इति

---

1. एतत् श्लोकद्वयं केषुचित् न दृश्यते ॥

तस्मादुपनीतैरेव त्रैवर्णिकैर्वेदस्य सम्बन्धः।

तत्प्रामाण्यं तु बोधकत्वात् स्वत एव सिद्धम्। पौरुषेयवाक्यं तु बोधकमपि सत् पुरुषगतभ्रान्तिमूलत्वसम्भावनया तत्परिहाराय मूलप्रमाणमपेक्षते, न तु वेदः। तस्य नित्यत्वेन वक्तृदोषशङ्कानुदयात्। एतदेवजैमिनिना सूत्रितम्—'तत्प्रमाणं बादरायणस्यानपेक्षितत्वात् (मी० १।१।५) इति।[1]

ननु वेदोऽपि कालिदासादिवाक्यवत् पौरुषेय एव ब्रह्मकार्य्यत्वश्रवणात्-

'ऋचः सामानि जज्ञिरे।
छन्दांसि जज्ञिरे तस्माद्
यजुः तस्मादजायत'॥ ( ऋ० १०।९०।९ ) इति श्रुतेः।

अत एव बादरायणः 'शास्त्रयोनित्वात्' ( वे० १।१।३ ) इति[2] सूत्रेण ब्रह्मणो वेदकारणत्वमवोचत्। मैवं, श्रुतिस्मृतिभ्यां नित्यत्वावगमात्।

'वाचा विरूप नित्यया' इति श्रुतेः ( ऋ० ८।७५।६ )[3]
'अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवाः, इति स्मृतेश्च।

बादरायणोऽपि देवताधिकरणे सूत्रयामास। 'अत एव च नित्यत्वम्' ( वे० १।३।२९ ) इति[4]। तर्हि परस्परविरोध इति चेत्, न नित्यत्वस्य व्यावहारिकत्वात्। सृष्टेरूर्द्ध्वं संहारात् पूर्वं व्यवहारकालः, तस्मिन्नुत्पत्तिविनाशादर्शनात्। कालाकाशादयो यथा नित्या एवं वेदोऽपि व्यवहार-

१. 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानोपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे, तत्प्रमाणं बादरायणस्यानपेक्षितत्वात्' इति सम्पूर्णं सूत्रम्। तत्रेदमित्थं व्याख्यातं शबरस्वामिना स्वभाष्ये–'औत्पत्तिक इति नित्यं ब्रूमः। उत्पत्तिर्हि भाव उच्यते लक्षणया। अवियुक्तः शब्दार्थयोर्भावः सम्बन्धो, नोत्पन्नयोः पश्चात् सम्बन्धः। औत्पत्तिकः शब्दस्यार्थेन सम्बन्धः, तस्य अग्निहोत्रादिलक्षणस्य धर्मस्य निमित्तं प्रत्यक्षादिभिरनवगतस्य। कथम्। उपदेशो हि भवति। उपदेश इति विशिष्टस्य शब्दस्योच्चारणम्। अव्यतिरेकश्च ज्ञानस्य। नहि तदुत्पन्नं ज्ञानं न विपर्येति, न तच्छक्यते वक्तुम्, एतदेवमिति। यथा भवति–यथा विज्ञायते, न तथा भवति-तथैतन्न विज्ञायते, तथैतदिति अन्यदस्य हृदये अन्यद् वाचि स्यात्। एवं वदतो विरुद्धमिदं गम्यते अस्ति वेति, तस्मात् तत्प्रमाणमनपेक्षत्वात्। नहि एवं सति प्रत्ययो ह्यसौ। बादरायणग्रहणं बादरायणस्येदं मतं कीर्त्यते बादरायणं पूजयितुम्, नात्मीयं मतं पर्युदासितुम्।'

२. तदिदमेवं व्याख्यातवन्तः श्रीशङ्करभगवत्पादाः—महत ऋग्वेदादेः शास्त्रस्यानेकविद्यास्थानोपबृंहितस्य प्रदीपवत् सर्वार्थावद्योतिनः सर्वज्ञकल्पस्य योनिः कारणं ब्रह्म। नहीदृशस्य शास्त्रास्यर्ग्वेदादिलक्षणस्य सर्वज्ञगुणान्वितस्य सर्वज्ञादन्यतः सम्भवोऽस्ति।

३. तस्मै नूनमभिद्यवे वाचा विरूप नित्यया। वृष्णे चोदस्व सुष्टुतिम्॥

'हे विरूप नानारूपैतन्नामक महर्षे त्वं तस्मै सिद्धायाभिद्यवेऽभिगततृप्तये वृष्णे वर्षकायाग्नये नित्यया उत्पत्तिरहितया वाचा मन्त्ररूपया सुष्टुतिं नूनमिदानीं चोदस्व। स्तुहीत्येवमृषिः आत्मानं ब्रवीति यजमानो होतारं वा विरूपम्' इति तत्रत्यं सायणभाष्यम्।

४. अत एव नियताकृतेर्देवादेर्जगतो वेदशब्दप्रभवत्वात् वेदशब्दे नित्यत्वमपि प्रत्येतव्यमिति शाङ्करभाष्यात्।

काले कालिदासादिवाक्यवत् पुरुषविरचितत्वाभावान्नित्यः आदिसृष्टौ तु कालाकाशादिवदेव ब्रह्मणः सकाशाद्वेदोत्पत्तिराम्नायते। अतो विषय-भेदान्न परस्परविरोधः। ब्रह्मणो निर्दोषत्वेन वेदस्य वक्तृदोषाभावात् स्वतस्सिद्धं प्रामाण्यं तदवस्थम्। तस्माल्लक्षणप्रमाणसद्भावाद्विषयप्रयोजन-सम्बन्धाधिकारिसत्त्वात् प्रामाण्यस्य सुस्थत्वाच्च वेदो व्याख्यातव्य एव। यथोक्तविषयादिसद्भावमभिप्रेत्य 'स्वाध्यायोऽध्येतव्यः' (तै० आ० २।१५) इत्यध्ययनं विधीयते। पाठमात्रस्याध्ययनशब्दवाच्यत्वेनार्थावबोधस्या-विहितत्वाद्वेदव्याख्यानमयुक्तमिति चेत्, न। विधेर्बोधपर्य्यवसायित्वात्। एतच्च भट्टगुरुमतानुसारिभिर्बहुधा प्रपञ्चितम् आम्नायते च—

'यदधीतमविज्ञातं निगदेनैव शब्द्यते।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्'॥
'स्थाणुरयं भारहारः किलाभूत्
अधीत्य वेदं न विजानाति योऽर्थम्।
योऽर्थज्ञ इत्सकलं भद्रमश्नुते
नाकमेति ज्ञानविधूतपाप्मा॥ (नि १।६)

'ब्राह्मणेन निष्कारणो धर्म्मो षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति। एवं तर्हि ज्ञानस्य पृथग्विधानादध्ययनं पाठमात्रमिति चेत्, अस्तु नाम, वर्णयन्त्येव शाङ्करदर्शनानुसारिणः।

क्रतुविधिभिरेवानुष्ठानान्यथानुपपत्त्या वेदार्थज्ञानस्य प्रापितत्वान्नैत-द्विधेयमिति चेत्, तर्हि तद्विधिबलाद्वेदनमात्रेण स्वतन्त्रं किञ्चिदपूर्व्वमस्तु। श्रूयते ह्यनुष्ठानज्ञानयोः स्वतन्त्रं पृथक् फलम्—

'सर्वं पाप्मानं तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेद' इति।

अल्पप्रयाससाध्येन वेदनेन तत्सिद्धौ बह्वायाससाध्यमनुष्ठानं व्यर्थं स्या-दिति चेत्, न। तरणीयाया ब्रह्महत्याया मानसिककायिकत्वादिभेदेन तार-तम्योपपत्तेः। मनसा सङ्कल्पिता वाचाभ्यनुज्ञाता वा परहस्तेन कारिता स्वयं कृता पुनः पुनः कृता चेत्येवं तारतम्येनावस्थिता ब्रह्महत्या अनेकविधा। अतस्तरणमप्यनेकविधं यथा स्वर्गो बहुविधस्तद्वत्। 'अग्निहोत्रं जुहुयात् स्वर्गकामः', 'दर्शपौर्णमासाभ्यां स्वर्गकामो यजेत', 'ज्योतिष्टोमेन स्वर्गकामो यजेत्', इत्याद्युच्चावचकर्म्मणामेकविधफलासम्भवात् स्वर्गो बहुविधः। यत्तु कर्म्मानुष्ठानकालीनं वेदनं तत्कर्मफल एवातिशयं दर्शयति। 'उभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद' इति विद्वदविद्वत्प्रयोगौ प्रस्तुत्य, 'यदेव विद्यया करोति तदेव वीर्य्यवत्तरं भवति' इत्याम्नायात्। अङ्गोपास्तिविषयमेतद्वा-क्यमिति चेत्, न। न्यायस्य समानत्वात्। अस्ति ह्यस्यार्थस्योपोद्बलकं लिङ्गम्। प्रजापतिः किल सोमयागेभ्योऽर्व्वाचीनानग्निहोत्रपौर्णमास्यामावा-

स्यन्नामकान् परस्परमुच्चावचान् यज्ञान् ससर्ज । सोमयागांश्चाग्निहोत्रादिभ्यः प्रौढानग्निष्टोमोक्थ्यातिरात्रनामकान् परस्परमुच्चावचान् सृष्ट्वा-प्रथमसृष्टेष्वग्निहोत्रादिष्वभिमानविशेषेण वर्गद्वयं तुलयोदमिमीत । एतत् वृत्तान्तं विजानतोऽग्निहोत्रादिभिरग्निष्टोमादिफलं भवति । तथा च ब्राह्मणमाम्नायते—

'प्रजापतिर्यज्ञानसृजत । अग्निहोत्रञ्चाग्निष्टोमञ्च । पौर्णमासीञ्चोक्थ्यञ्च । अमावास्याञ्चातिरात्रञ्च तानुदमिमीत । यावदग्निहोत्रमासीत्तावानग्निष्टोमः । यावती पौर्णमासी तावानुक्थ्यः । यावत्यमावास्या तावानतिरात्रः । य एवं विद्वानग्निहोत्रं जुहोति, यावदग्निष्टोमेनोपाप्नोति तावदुपाप्नोति । य एवं विद्वान् पौर्णमासीं यजते, यावदुक्थ्येनोपाप्नोति तावदुपाप्नोति । य एवं विद्वानमावास्यां यजते, यावदतिरात्रेणोपाप्नोति ताशदुपाप्नोति' इति । तदेतद्वेदनस्य सर्वत्र स्वतन्त्रफलकत्वं लिङ्गम् । किञ्च तत्तद्विधिसमीपे य एवं वेदेति वचनानि वेदनादेव फलं ब्रुवते । तान्यर्थवादरूपाणीति चेत्, अस्तु नाम । सहामहे वैतमपराधं तेषां वचनानां विधेयार्थप्रशंसापरत्वात् । तर्हि 'यत्परः शब्दः स शब्दार्थः', इति न्यायेन स्वार्थे प्रामाण्यं नास्तीति चेत्, न । महातात्पर्य्यस्य विधेयविषयत्वेऽप्यवान्तरतात्पर्य्यस्य स्वार्थविषयतानिवारणात् । 'ग्रावाणः प्लवन्ते' इत्यर्थवादस्यापि स्वार्थप्रामाण्यं प्रसज्येतेति चेत्, न । प्रमामान्तरबाधितत्वात् । 'द्विः संवत्सरस्य सस्यं पच्यते' इत्याद्यर्थवादस्य तु बाधाभावेऽप्यनुवादत्वान्न स्वार्थे प्रामाण्यम् । वेदनफलवचनानि तु नानुवादकानि नापि बाध्यानि । तस्मादर्थवादत्वेऽप्यस्त्येषां स्वार्थे प्रामाण्यम् । अन्यथा मन्त्रार्थवादादिभ्यो देवादीनां विग्रहादिमत्त्वं न सिध्येत् ।

अत एवोक्तम्—

'विरोधे गुणवादः स्यादनुवादोऽवधारिते ।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः ॥' इति

किं वहुना । विद्यत एवावश्यं वेदनमात्रादपूर्वम् । अतो वेदनाय वेदो व्याख्यायते । योऽयं विषयरूप इष्टप्राप्त्यनिष्टपरिहारोपायः सामान्यतो निर्दिष्टः स विशेषेण स्पष्टीक्रियते ।

वेदस्तावत् काण्डद्वयात्मकः । तत्र पूर्व्वस्मिन् काण्डे नित्यनैमित्तिककाम्यनिषिद्धरूपं चतुर्विधं कर्म्म प्रपिपाद्यम् । 'यावज्जीवमग्निहोत्रं जुहोति' इत्यादिकं नित्यं, तस्य नियतनिमित्तत्वात् । 'यस्य गृहान् दहत्यग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत्' इत्यादिकं नैमित्तिकं, तस्यानियतनिमित्तत्वात् । 'चित्रया यजेत पशुकामः' इत्यादिकं काम्यम् । 'तस्मान्मलवद्वाससा न संवदेत न सहासीत' इत्यादिकं निषिद्धम् । तेषु नित्यनैमित्तिकानुष्ठानात्तदकरणे प्रत्यवायरूपमनिष्टं परिह्रियते । स च प्रत्यवायो

याज्ञवल्क्येन स्मर्य्यते—

'विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् ।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥' (या० स्मृ० ३।२१९) इति

यावज्जीवादिवाक्येष्वनुक्तोऽप्यवर्जनीयतया स्वाभीष्टः स्वर्गः प्राप्यते । तथा चापस्तम्बः—'तद्यथा आम्रे फलार्थे निर्म्मिते च्छायागन्धावित्यनूत्पद्येते एवं धर्म्मेऽपि चर्य्यमाणेऽर्था अनूत्पद्यन्ते' इति । काम्यस्येष्टप्राप्तिहेतुत्वं तद्विधिवाक्य एव स्पष्टम् । इष्टविधातमनिष्टञ्चार्थात् परिह्रियते । निषिद्धवर्जनेन रागप्राप्तनिषिद्धानुष्ठानजन्यो नरकपातः परिह्रियते । न केवलं नित्यनैमित्तिकाभ्यामानुषङ्गिकस्वर्गप्राप्तिः, किन्तु धीशुध्यादिविविदिषोत्पादनद्वारा ब्रह्मज्ञानहेतुत्वमपि तयोरस्ति । तथा च वाजसनेयिनः समामनन्ति—'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति । एवं तर्हि पूर्व्वकाण्ड एवाशेषपुरुषार्थसिद्धेः कृतमुत्तरकाण्डेनेति चेत्, न । अपुनरावृत्तिलक्षणस्यात्यन्तिकपुरुषार्थस्य तत्रासिद्धेः । अत एवाथर्वणिकाः कर्म्मिणो दक्षिणमार्गेण चन्द्रप्राप्तिं पुनरावृत्तिं चामनन्ति—'स सोमलोके विभूतिमनुभूय पुनरावर्त्तते' इति । अत उत्तरकाण्ड आरब्धव्यः । आत्यन्तिकतुरुषार्थसिद्धिश्च द्विविधा सद्योमुक्तिः क्रममुक्तिश्चेति । वर्त्तमानदेहपातानन्तरमेव सिध्यति सद्योमुक्तिः । उत्तरमार्गेण गत्वा ब्रह्मलोके चिरं भोगाननुभूय तत्रोत्पन्नज्ञानस्य ब्रह्मलोकावसाने सिध्यति क्रममुक्तिः । तस्मादुत्तरकाण्डे ब्रह्मोपदेशो ब्रह्मोपास्तिश्चेत्युभयं प्रतिपाद्यते । ब्रह्मोपास्तिप्रसङ्गाद् ब्रह्मदृष्टया प्रतीकमुपास्यत्वेन सांसारिकफलकामिनमुद्दिश्य प्रतिपाद्यते । ब्रह्मोपासकप्रतीकोपासकयोः समानेऽप्युत्तरमार्गे प्रतीकोपासकस्य विद्युल्लोकादूर्ध्वं ब्रह्मलोकगमनाभावेन क्रममुक्तेरप्यभावादस्ति पुनरावृत्तिः । एतच्च 'अप्रतीकालम्बनान् नयति' इत्यधिकरणे (वे० ४।३।१५–१६) द्रष्टव्यम् ।

नन्वस्त्वेवं पूर्वोत्तरकाण्डयोस्तत्र तत्रोचितप्रयोजनं फलविशेषश्च, तथापि पूर्व्वकाण्डस्यादौ कर्म्मान्तरं परित्यज्य दर्शपूर्णमासेष्टिरेव कुतः प्रतिपाद्यत इति चेत्, प्रकृतित्वान्निरपेक्षत्वाच्चेति ब्रूमः । प्रकर्षेण अङ्गोपदेशो यत्र क्रियते सा प्रकृतिः । कृत्स्नाङ्गविषयत्वमुपदेशस्य प्रकर्षः । विकृतिषु तु विशेषाङ्गमात्रस्योपदेशः क्रियते अङ्गान्तराणि तु प्रकृतेरतिदिश्यन्ते । अतोऽतिदेशस्य प्रकर्षाभावः । प्रकृतिस्त्रिविधा—अग्निहोत्रमिष्टिः सोमश्चेति । त्रिष्वप्येतेषु अन्यनैरपेक्ष्येण स्वाङ्गजातं सर्वमुपदिष्टम् । तत्र सोमयागस्य स्वरूपेणान्यनैरपेक्ष्येऽप्यङ्गेषु दीक्षणीयाप्रायणीयादिषु दर्शपूर्णमासेष्टिसापेक्षत्वान्न पूर्व्वभावित्वं युक्तम् । इष्टेस्तु सोमयागनैरपेक्ष्यात् सोमात् प्राचीनत्वं युक्तम् । यद्यप्यग्निहोत्रस्य स्वरूपेऽङ्गेषु वा

नास्त्यन्यापेक्षा तथाप्यग्निसिद्धयपेक्षत्वादाहवनीयाद्यग्नीनाञ्च पावमानेष्टि-साध्यत्वात्, पावमानेष्टीनां च दर्शपूर्णमासविकृतित्वात् परम्परयाऽग्नि-होत्रस्य दर्शपूर्णमासापेक्षास्तीति प्रथमभावित्वं न युक्तम्। दर्शपूर्णमासयो-रग्निसाध्यत्वादग्निसाधकमाधानं प्रथमतो वक्तव्यमिति चेत्, मैवम्। नाधानमात्रेणाग्नयः सिध्यन्ति किन्तु पवमानेष्टिभिरपि। ताश्च इष्टयो दर्शपूर्णमासविकृतित्वात् साक्षादेव दर्शपूर्णमासावपेक्षन्ते। दर्शपूर्णमासौ तु अग्निद्वारा पावमानेष्टिसापेक्षावपि न साक्षाद् पवमानेष्टीरपेक्षेते। अतो निरपेक्षत्वाद्दर्शपूर्णमासेष्टिरेव प्रथमं वक्तव्या। ऋग्वेदसामवेदयोरादौ दर्शपूर्णमासेष्टिर्नाम्नातेति चेत्, बाढम्। यजुर्वेदमपेक्ष्य दर्शपूर्णमासयो-रादित्वमुक्तं कर्मकाण्डविषये यजुर्वेदस्यैव प्राधान्यात्। आनुपूर्व्यात् कर्मणां स्वरूपं यजुर्वेदे सामाम्नातम्। तत्र तत्र विशेषापेक्षायामपेक्षितायां याज्या-पुरोऽनुवाक्यादय ऋग्वेदे सामाम्नायन्ते, स्तोत्रादीनि तु सामवेदे। तथा सति भित्तिस्थानीयो यजुर्वेदः, चित्रस्थानीयावितरौ। तस्मात् कर्म्मसु यजु-र्वेदस्य प्राधान्यं, तस्मिंश्च दर्शपूर्णमासेष्टिरादौ समाम्नाता। यद्यपि मन्त्र-ब्राह्मणात्मको वेदः, तथापि ब्राह्मणस्य मन्त्रव्याख्यानरूपत्वान्मन्त्रा एवादौ समाम्नाताः। मन्त्राश्च त्रिविधाः ऋचः सामानि यजूंषि चेति। तत्र यजुषा-मध्वर्य्युवेदेऽतिबहुलत्वात् क्वचित् क्वचिदृचां सद्भावेऽपि यजुर्वेद इत्येवा-ख्यायते। अध्वर्युवेदत्वञ्चास्यानादिसिद्धयाज्ञिकसमाख्याबलादवगन्तव्यम्। अस्मिन् वेदे समाख्याता दर्शपूर्णमासेष्टिमन्त्रास्त्रिविधाः, आध्वर्य्यवाः। याजमाना हौत्रकाश्चेति। 'इषे' इत्यादौ प्रपाठके पठिता अध्वर्यवाः। 'सं त्वा सिञ्चामि' इत्यादौ पठिता याजमानाः। 'सत्यं प्रपद्ये' इत्यादो पठिता हौत्राः। एतेषां मध्ये याजमानानां हौत्राणाञ्च चित्रस्थानियत्वाद् भित्तिस्था-नीयानामाध्वर्य्यवाणामेवादौ पाठो युज्यत इति। तेऽपि आध्वर्य्यवाः 'इषे त्वा' इत्यादिषु त्रयोदशस्वनुवाकेषु आम्नाताः। तत्र प्रथनेऽनुवाके वत्सा-पाकरणार्था मन्त्राः। द्वितीये वर्हिःसम्पादनार्थाः। तृतीये दोहनार्थाः। चतुर्थे हविर्निवापार्थाः। पञ्चमे व्रीह्यवघातार्थाः। षष्ठे तण्डुलपेषणार्थाः। सप्तमे कपालोपधानार्थाः। अष्टमे पुरोडाशनिष्पादनार्थाः। नवमे वेदीकर-णार्थाः। दशमे प्राधान्येनाज्यग्रहणार्थाः प्रसङ्गात् पत्नीसंनहनार्थाः। एका-दशे प्राधान्येनेध्मसंनहनार्था बर्हिरास्तरणाद्यर्थाश्च। द्वादशे आधारार्थाः। अत्र सामिधेनीप्रयाजाज्यभागप्रधानयागादिमन्त्राणां प्राप्तावसरत्वेऽपि तेषां हौत्रत्वात् तानुपेक्ष्योपरितनप्रयोगाङ्गभूता आध्वर्यवाः स्रुग्व्यूहनादिमन्त्रा-स्त्रयोदशे समाम्नातः। तदेतत् सर्व्वं विनियोगसंग्रहकारेणेत्थं संगृहीतम्—

'ये दर्शपूर्णमासाङ्गमन्त्रा एते समासतः।
इषे त्वाऽद्यनुवाकेषु त्रयोदशसु वर्णिताः॥
वत्सापाकरणं बर्हिर्दोहो निर्वापकण्डने।

पेषणञ्च कपालानि पुरोडाशश्च वेदिका ॥
आज्यग्रहेध्मसंनाहावाघारोपरितन्त्रके ।
इत्युक्ता अनुवाकार्थाः प्रतिमन्त्रं क्रियोच्यते' ॥ इति ।

किमिदं वत्सापाकरणं, कथं वा तस्य प्राथम्यमिति चेत्, उच्यते। सन्ति दर्शयागे त्रीणि प्रधानानि हवींषि, पूर्णमासयागे च त्रीणि। आग्नेयोऽष्टाकपाल ऐन्द्रं दध्यैन्द्रं पय इति दर्शयागे। आग्नेलोऽष्टाकपाल आज्येन प्राजापत्य उपांशुयागोऽग्नीषोमीय एकादशकपाल इति पूर्णमासे। तत्र प्रतिपद्दिने दधिहोमे दधिसम्पादनायामावस्यायां रात्रौ गावो दोग्धव्याः। तद्दोहनार्थं प्रातःकाले लौकिकदोहनादूर्ध्वं स्वमातृभिः सह सञ्चरन्तो वत्सा मातृभ्योऽपाकरणीयाः। तदिदं वत्सापाकरणं यथोक्तरीत्या, तस्य प्राथम्यञ्च। तत्र वत्सापाकरणं सद्यश्छिन्नया पलाशशाखया कर्त्तव्यमिति। तच्छेदनार्थोऽयमिषे त्वेति मन्त्र आदौ समाम्नायते। तस्य च मन्त्रस्य तच्छेदनाङ्गत्वं ब्राह्मणे द्रष्टव्यम्। अत एव सब्राह्मणो मन्त्रो ज्ञातव्य इति। छन्दोगा अधीयते—'यो ह ह वा अविदितार्षेयच्छन्दो दैवतब्राह्मणेन मन्त्रेण यजति याजयति वाध्यापयति वा स्थानं वर्च्छति गर्त्तं वा पात्यते प्रमीयते पापीयान् भवति। तस्मादेतानि मन्त्रे मन्त्रे विद्यात्' इति। आर्षेय ऋषिसम्बन्धः। अतीन्द्रियार्थद्रष्टारो हि ऋषयः। तेषां वेदद्रष्टृत्वं स्मर्य्यते—

'युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः।
लेभिरे तपसा पूर्व्वमनुज्ञाताः स्वयम्भुवा' ॥ इति ।

इषे त्वादिनाञ्च मन्त्राणां प्रजापतिर्ऋषिः। तथा च काण्डानुक्रमणिकायामुक्तम्—

'शाखादि याजमानञ्च होतॄन् हौत्रञ्च दार्शिकम्।
तद्विधीन् पितृमेधञ्च नवाहुः कस्य तद्विदः' ॥ इति ।

शाखादिरिषे त्वादिप्रपाठकः। याजमानं सं त्वा सिञ्चामीत्यादि। होतारः चित्तिः स्रुगित्यादयो मन्त्राः। सत्यं प्रपद्य इत्यादिकं दार्शिकं हौत्रम्। तद्विधयः प्रोक्तानाञ्चतुर्विधमन्त्राणां चत्वारि ब्राह्मणानि। पितृमेधः परे युवा समित्यादिः। तान्येतानि नवकाण्डानि प्रजापतिना दृष्टानि। छन्दोविशेषाश्च वेदाङ्गभूते छन्दोनामके ग्रन्थे द्रष्टव्याः। मन्त्रपदव्याख्यानादेव तत् प्रतिपाद्यार्थरूपदेवता विज्ञायते। ब्राह्मणविशेषस्तु तत्तन्मन्त्रव्याख्यानावसर एवोदाह्रियते। यद्यपि मन्त्रविनियोगा ब्राह्मणे सर्वेऽपि नाम्नाताः तथापि कल्पसूत्रकारैर्ब्राह्मणान्तरपर्य्यालोचनया सर्वेऽभिहिताः। अतो बोधायनादिसूत्रोदाहरणादिपूर्व्वकं ब्राह्मणानुसारेण मन्त्रार्थं योजयामः।

इति तैत्तिरीयसंहिता भाष्यभूमिका ।



# ऋग्वेदसंहितायाः

## सायणाचार्यकृता

# भाष्यभूमिका

सायणाचार्यकृता

# ऋग्वेदभाष्योपक्रमणिका



वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ २ ॥
यत्कटाक्षेण तद्रूपं दधद् बुक्कमहीपतिः ।
आदिशन् माधवाचार्य्यं वेदार्थस्य प्रकाशने ॥ ३ ॥
ये पूर्वोत्तरमीमांसे ते व्याख्यायातिसंग्रहात् ।
कृपालुर्माधवाचार्य्यो वेदार्थं वक्तुमुद्यतः ॥ ४ ॥
आध्वर्यवस्य यज्ञेषु प्राधान्याद् व्याकृतः पुरा ।
यजुर्वेदोऽथ हौत्रार्थमृग्वेदो व्याकरिष्यते ॥ ५ ॥
एतस्मिन् प्रथमोऽध्यायः श्रोतव्यः सम्प्रदायतः ।
व्युत्पन्नस्तावता सर्वं बोद्धुं शक्नोति बुद्धिमान् ॥ ६ ॥

**अभ्यर्हितत्वादृग्वेदस्यैव व्याख्यानमादावुचितमिति पूर्वपक्षः ।**

अत्र केचिदाहुः—ऋग्वेदस्य प्राथम्येन सर्वत्र आम्नातत्वाद् 'अभ्यर्हितं पूर्वं' इति न्यायेन अभ्यर्हितत्वाद् तद्व्याख्यानमादौ युक्तम्; प्राथम्यं च पुरुषसूक्ते विस्पष्टम्—

'तस्माद् यज्ञात् सर्वहुत ऋचः[1] सामानि[2] जज्ञिरे ।
छन्दांसि जज्ञिरे तस्मात् यजु[3]स्तस्मादजायत ॥' (ऋ. सं. १०।९०।९)इति

अस्मात् 'सहस्रशीर्षा पुरुषः' (ऋ० सं० १०।९०।१) इत्युक्तात् परमेश्वरात्, यज्ञाद् यजनीयात् । सर्व्वहुतः सर्व्वैर्हूयमानात् । यद्यपि इन्द्रादयस्तत्र तत्र हूयन्ते तथापि परमेश्वरस्यैव इन्द्रादिरूपेणावस्थानादविरोधः ।

---

१. ऋग्लक्षणं यथाह जैमिनिः—
'तेषामृग्यत्रार्थवशेन पादव्यवस्था' (मी० २।१।३५) 'तत्र पादकृता व्यवस्था स मन्त्र ऋङ्नामा' शवरस्वामी । 'पादेनार्थेन चोपेता वृत्तबद्धा मन्त्रा ऋचः' इति जैमिनीयन्याय-मालायां माधवाचार्यः ।

२. सामलक्षणम्—'गीतिषु सामाख्या' (मी० २।१।३६) 'विशिष्टा काचिद् गीतिः सामेत्युच्यते । प्रगीते हि मन्त्रवाक्ये सामशब्दमभियुक्ता उपदिशन्ति' इति शवरस्वामी ।

३. यजुर्लक्षणम्—'शेषे यजुःशब्दः' (मी० २।१।३७) 'या न गीतिर्न च पादबद्धं तत् प्रश्लिष्टपठितं यजुः' इति शवरस्वामी । 'वृत्तिगीतिवर्जितत्वेन प्रश्लिष्टपठिता मन्त्रा यजूंषि' इति जैमिनीयन्यायविस्तरे माधवाचार्यः ।

तथा च मन्त्रवर्णः—

'इन्द्रं मित्रं वरुणमग्निमाहु-
रथो दिव्यः स सुपर्णो गरुत्मान् ।
एकं सद् विप्रा वहुधा वदन्त्य-
ग्नि यमं मातरिश्वानमाहुः ॥' (ऋ. सं. १।१६४।४६) इति

वाजसनेयिनश्चामनन्ति—

'तद् यद् इदमाहुरमुं यजामुं यजेत्येकैकं देवम्
एतस्यैव सा विसृष्टिरेष उ ह्येव सर्व्वे देवाः' (बृ. उ. १।४।६) इति।

तस्मात् सर्व्वैरपि परमेश्वर एव हूयते ।

न केवलमृचां पाठप्राथम्येन अभ्यर्हितत्वं किन्तु यज्ञाङ्गदार्ढ्यहेतुत्वादपि । तथा च तैत्तिरीयाः आमनन्ति—

'तत् वै यज्ञस्य साम्ना यजुषा क्रियते शिथिलं तद्, यद् ऋचा तद् दृढम् ( तै० सं० ६।५।१०।३ ) इति ।

तथा च सर्व्ववेदगतानि ब्राह्मणानि स्वाभिहितेऽर्थे विश्वासदाढ्र्याय 'तदेतद्‌ऋचा अभ्युक्तम्' इति ऋचमेव उदाहरन्ति । मन्त्रकाण्डेष्वपि यजुर्वेदगतेषु तत्र तत्र अध्वर्युणा प्रयोज्या ऋचो बहव आम्नाताः । साम्नां तु सर्व्वेषाम् ऋगाश्रितत्वं प्रसिद्धम् । आथर्वणिकैरपि स्वकीयसंहितायाम् ऋच एव बाहुल्येन अधीयन्ते । अतोऽन्यैः सर्वैर्वेदैरादृतत्वादभ्यर्हितत्वं प्रसिद्धम् ।

छन्दोगाश्च प्राथम्ये सनत्कुमारं प्रति नारदवाक्यमेवमामनन्ति—
'ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थम्' (छां. उ. ७।१।२) इति मुण्डकोपनिषद्यपि एवमाम्नायते—

'ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः' ( मुं० उ० १।१।५ ) इति ।

तापनीयोपनिषद्यपि मन्त्रराजपादेषु क्रमेणाध्ययनमेवमामनन्ति—

'ऋग्यजुःसामाथर्वाणश्चत्वारो वेदाः साङ्गाः सशाखाश्चत्वारः पादा भवन्ति' ( नृ० ता० उ० १।२ ) इति ।

एवं सर्व्वत्र उदाहरणीयम् । तस्माद् ऋग्वेदस्याभ्यर्हितस्यादौ व्याख्यानमुचितमिति ।

**यज्ञानुष्ठानार्थत्वाद् यजुर्वेदस्यैवादौ व्याख्यानमित्युत्तरपक्षः ।**

तान् प्रति एतदुच्यते—

अस्तु एवं सर्व्ववेदाध्ययनतत्पारायणब्रह्मयज्ञजपादौ ऋग्वेदस्यैव प्राथम्यम् । अर्थज्ञानस्य तु यज्ञानुष्ठानार्थत्वात् तत्र तु यजुर्वेदस्यैव प्रधानत्वाद् तद्वचाख्यानमेव आदौ युक्तम् ।

तत्प्राधान्यं च काचिदृगेव आह—

'ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्वरीषु ।

ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां विमिमीत उ त्वः ॥'
( ऋ. सं. १०।७१।११ ) इति ।

एतस्या ऋचस्तात्पर्यं निरुक्तकारो यास्कः सङ्क्षिप्य दर्शयति 'इति ऋत्विक्कर्मणां विनियोगमाचष्टे' इति । पुनरपि स एव प्रथमं पादं विवृणोति—'ऋचामेकः पोषमास्ते पुपुष्वान् होतर्गर्चनी' (नि० १।८) इति । अस्यायमर्थः—त्वशब्दः एकशब्दपर्य्यायो होतृविशेषणम् । होतृनामक एक ऋत्विग् यज्ञकाले स्वकीयवेदगतानाम् ऋचां पुष्टिं कुर्वन्नास्ते । भिन्नप्रदेशेष्वाम्नतानाम् ऋचां सङ्घमेकत्र सम्पाद्यैतावदिदं शस्त्रमिति क्लृप्तिं करोति । सेयं पुष्टिः । अर्चनीत्यमुमर्थमृक्छब्द आचष्टे । अर्च्यते प्रशस्यतेऽनया देवविशेषः क्रियाविशेषस्तत्साधनविशेषो वेत्यृक्छब्दव्युत्पत्तिरिति ।

अथ द्वितीयं पादं विवृणोति—'गायत्रमेको गायति शक्वरीषूद्गाता । गायत्रं गायतेः स्तुतिकर्म्मणः शक्वर्य ऋचः शक्नोतेस्तद् यदाभिर्वृत्रमशकद् हन्तुं तच्छक्वरीणां शक्वरीत्वमिति विज्ञायते' इति । अस्यायमर्थः—उद्गातृनामक एक ऋत्विग् गायत्रशब्दाभिधेयं स्तोत्रं शक्वरीशब्दाभिधेयास्वृक्षु गायति, धातूनामनेकार्थत्वेन स्तुतिक्रियावाचिनो गायतिधातोरुत्पन्नोऽयं गायत्रशब्दः । शक्वरीशब्दस्तु शक्नोतिधातोरुत्पन्नः, वृत्रं शत्रुं हन्तुं शक्नोति आभिर्ऋग्भिरित्येषा व्युत्पत्तिः कस्मिश्चित् ब्राह्मणे विज्ञायत इति ।

अथ तृतीयं पादं विवृणोति—'ब्रह्मैको जाते जाते विद्यां वदति, ब्रह्मा सर्वविद्यः सर्वं वेदितुमर्हति' इति । अस्यायमर्थः—ब्रह्मनामक एक ऋत्विग् जाते जाते तदा तदा उत्पन्ने यज्ञे प्रस्तुते प्रणयनादिकर्म्मणि विद्याम् अनुज्ञां वदति; 'ब्रह्मन् अपः प्रणेष्यामि' इत्येवं सम्बोधितः सन् 'ॐ प्रणय' इत्यनुजानाति । स च ब्रह्मा वेदत्रयोक्तसर्व्वकर्म्माभिज्ञः । तस्माद् योग्यतां दृष्ट्वा तत्तदनुज्ञातुं सति प्रमादे समाधातुं च समर्थ इति । तच्च सामर्थ्यं छन्दोगा आमनन्ति—

'एष एव यज्ञस्तस्य मनश्च वाक् च वर्त्तनी । तयोरन्यतरां मनसा संस्करोति ब्रह्मा, वाचा होताध्वर्य्युरुद्गातान्यतराम्' (छ. उ. ४।१६। १-२ ) इति ।

कृत्स्नो यज्ञः प्रमादराहित्याय मनसा सम्यगनुसन्धेयः, वाचा च वेदत्रयोक्तमन्त्राः पठनीयाः । तत्र होत्रादयस्त्रयो मिलित्वा वाग्रूपं यज्ञमार्गं संस्कुर्वन्ति, ब्रह्मा त्वेक एव मनोरूपं यज्ञमार्गं कृत्स्नमपि संस्करोति । तस्मादस्यास्ति सामर्थ्यमिति ।

अथ चतुर्थं पादं विवृणोति—'यज्ञस्य मात्रां विमिमीत एकोऽध्वर्य्युरध्वर्य्युरध्वरयुरध्वरं युनक्ति अध्वरस्य नेता' इति । अस्यायमर्थः—अध्वर्य्युनामक एक ऋत्विग् यज्ञयस्य मात्रां स्वरूपं विमिमीते विशेषेण निष्पादयति । मीयते निर्मीयते इति मात्रा स्वरूपम् । तन्निष्पादकत्वं च अध्वर्य्योर्नामनिर्वचनादवगम्यते । 'अध्वर्य्युः' इत्यत्र छान्दस्या प्रक्रियया लुप्तमकारं पुनः प्रक्षिप्य

'अध्वरयु:' इति नाम सम्पादनीयम्। अध्वरं युनक्ति इति अवयावार्थः। अध्वरस्य नेता इति तात्पर्य्यार्थं इति।

एतदेव अभिप्रेत्य अध्वर्युवेदस्य यागनिष्पादकत्वद्योतकं निर्वचनं यास्को दर्शयति—

'मन्त्रा मननात्, छन्दांसि छादनात्, स्तोमः स्तवनात् यजुर्यजतेः' (नि० ७।१२) इति।

एवंसति अध्वर्युसम्बन्धिनि यजुर्वेदे निष्पन्नं यज्ञशरीरमुपजीव्य तदपेक्षितौ स्तोत्रशस्त्ररूपौ अवयवौ इतरेण वेदद्वयेन पूर्य्येते इत्युपजीव्यस्य यजुर्वेदस्य प्रथमतो व्याख्यानं युक्तम्। तत ऊर्ध्वं साम्नामृगाश्रितत्वाद् उभयोर्मध्ये प्रथमत ऋग्व्याख्यानं युक्तम् इति ऋग्वेद इदानीं व्याख्यायते।

**लक्षणप्रमाणराहित्याद् वेदस्यासद्भाव इति पूर्वपक्षः।**

ननु वेद एव तावन्नास्ति, कुतस्तदवान्तरविशेष ऋग्वेदः? तथा हि, कोऽयं वेदो नाम? न हि तत्र लक्षणं प्रमाणं वास्ति। न च तदुभयव्यतिरेकेण किञ्चिद् वस्तु प्रसिध्यति। 'लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिः' इति न्यायविदां मतन।

प्रत्यक्षानुमानागमेषु प्रमाणविशेषेषु अन्तिमो वेद इति तल्लक्षणमिति चेत्? न, मन्वादिस्मृतिषु अतिव्याप्तेः। समयबलेन 'सम्यक्परोक्षानुभवसाधनम्' इत्येतस्य आगमलक्षणस्य तास्वपि सद्भावात्।

'अपौरुषेयत्वे सति' इति विशेषणाददोष इति चेत्? न, वेदस्यापि परमेश्वरनिर्मितत्वेन पौरुषेयत्वात्। शरीरधारिजीवनिर्मितत्वाभावाद् अपौरुषेयत्वमिति चेत्? न, 'सहस्रशीर्षा पुरुषः' ( ऋ० सं० १०।९०।१ ) इत्यादि श्रुतिभिरीश्वरस्यापि शरीरित्वात्।

कर्म्मफलरूपशरीरधारिजीवनिर्मितत्वाभावमात्रेण अपौरुषेयत्वं विवक्षितमिति चेत्?। न, जीवविषैरग्निवाय्वादित्यैर्वेदानामुत्पादितत्वात्। 'ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोः सामवेद आदित्यात्' ( ऐत० ब्रा० ५।३२ ) ऐति। श्रुतेः ईश्वरस्य अग्नयादिप्रेरकत्वेन निर्मातृत्वं द्रष्टव्यम्।

मन्त्रब्राह्मणात्मकः शब्दराशिर्वेद इति चेत्? न, ईदृशो मन्त्र ईदृशं ब्राह्मणमित्यनयोरद्याप्यनिर्णीतत्वात्। तस्मान्नास्ति किञ्चिद् वेदस्य लक्षणम्।

नापि तत्सद्भावे प्रमाणं पश्यामः। 'ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थम्' (छां० उ० ७।१।२) इत्यादिवाक्यं प्रमाणमिति चेत्? न, तस्यापि वाक्यस्य वेदान्तःपातित्वेन आत्माश्रयत्वप्रसङ्गात्। न खलु निपुणोऽपि स्वस्कन्धमारोढुं प्रभवति।

'वेद एव द्विजातीनां निःश्रेयसकरः परः' ( या० स्मृ० १।४० )

इत्यादि स्मृतिवाक्यं प्रमाणमिति चेत्? न, तस्यापि उक्तश्रुतिमूलत्वेन निराकृतत्वात्।

प्रत्यक्षादिकं तु शङ्कितुमपि अयोग्यम्। वेदविषया तु लोकप्रसिद्धिः

सामशब्दवाच्यस्य गानस्य स्वरूपमृगक्षरेषु क्रुष्टादिभिः सप्तभिः स्वरै अक्षरविकारादिभिश्च निष्पाद्यते । क्रुष्टः प्रथमो द्वितीयस्तृतीयश्चतुर्थः पञ्चमः षष्ठश्चेत्येते सप्त स्वराः । ते चावान्तरभेदैर्बहुधा भिन्नाः । स्वरस्य सामनिष्पादकत्वं छान्दोग्योपनिषदः प्रथमे प्रपाठके ( ८। ३ । ४ ) प्रश्नोत्तराभ्यामनन्ति 'स ह शिलकः शालावत्यश्चैकितायनं दाल्भमुवाच हन्त ! त्वा पृच्छानीति । पृच्छेति होवाचका साम्नो गतिरिति ? स्वर इति होवाच' इति । काण्वा उद्गीथविद्यायां स्वरस्य सामसम्बन्धिसर्वस्वस्थानीयत्वं शोभनवर्णस्थानीयत्वं चाकनन्ति 'तस्य हैतस्य साम्नो यः स्वं वेद, भवति हास्य स्वं, तस्य स्वर एव स्वम्' इति, 'तस्य हैतस्य साम्नो यः सुवर्णं वेद, भवति हास्य सुवर्णं, तस्य वै स्वर एव सुवर्णम्' ( सामवि० ब्रा० १ प्रपा० १ खं० ) इति च ।

**अक्षरविकारादीनां सामनिष्पादकत्ववर्णनम् ।** अक्षरविकारादीनान्तु सामनिष्पादकत्वं नवमाध्यायस्य द्वितीयपादे एव 'अथकत्वाद् विकल्पः स्यात्' ( मी० ९।२।२९ ) इत्येतस्य सप्तमाधिकरणगतस्य सूत्रस्य व्याख्यानावसरे शबरस्वामिना स्पष्टमुक्तम् 'सामवेदे सहस्रं गीत्युपायाः । आहक इमे गीत्युपाया नाम ? उच्यते गीतिर्नाम क्रिया ह्याभ्यन्तरप्रयत्नजनितस्वरविशेषाणामभिव्यञ्जिका, सामशब्दाभिलप्या । सा नियतप्रमाणा, ऋचि गीयते । तत्सम्पादनार्थोऽयमृगक्षरविकारो विश्लेषो विकर्षणमभ्यासो विरामः स्तोभ इत्येवमादयः सर्वे सामवेदे समाम्नायन्ते'—इति । तद्विषये विचारो न्यायविस्तरेऽभिहितः—

'समुच्चया विकल्प्या वा विभिन्ना गीतिहेतवः ।
आद्यः प्रयोगग्रहणादर्थैकत्वाद् विकल्पनम् ।।

छान्दोग्ये तवल्कारादिशाखाभेदेषु विलक्षणा गीतिहेतवोऽक्षरविकारादय आम्नायन्ते, ते सर्वे कर्मानुष्ठाने समुच्चेतव्याः । कुतः ? प्रयोगवचनें सर्वेषां परिगृहीतत्वात् । मैवम्, एकैकशाखोक्तैरेवाक्षरविकारादिभिरध्ययनकाल एव गीतिस्वरूपनिष्पत्तेस्तन्निष्पत्तिलक्षणस्य प्रयोजनस्यैकत्वात्, प्रयोगवचनपरिगृहीता अपि व्रीहियववद् बृहद्रथन्तरवच्च विकल्पन्ते' इति ।।

**स्तोभस्य लक्षणनिर्देशः** गीतिहेतुषु स्तोभस्यात्यन्तप्रसिद्धत्वात् तल्लक्षणं तस्मिन्नेव पादे एकादशाधिकरणे चिन्तितम्—

"स्तोभस्य लक्षणं नास्ति किं वास्ति न विवर्णता ।
आधिक्यमप्यतिव्याप्तं विशिष्टं लक्षणं भवेत् ।।

न तावद् विवर्णत्वं लक्षणम्, वर्णविकारस्य विपरीतवर्णत्वेन स्तोभ-

त्वप्रसङ्गात् अग्न आयाही( सा० १ । १ )त्यस्यामृचि अकारस्य स्थाने ओकारं कृत्वा गायन्ति 'ओग्नायि'इति (गेयगा०प्रपा० १. साम१)। अधिको वर्णः स्तोभ इत्युक्ते सति अभ्यासेऽतिव्याप्तिः। पिबा सोममिन्द्र मन्दतु त्वेत्येतस्यामृचि ( पू० आ० ५।१।८ ) ददुत्वेत्यक्षर-त्रयं गानकाले ( गे० गा० १०।२।३ ) त्रिरभ्यस्तम् । अतो विकाराभ्यासयोरतिव्याप्तेर्नास्ति लक्षणम् इति चेत् ? मैवम्, 'अधिकत्वे सत्यृग्विलक्षणवर्णः स्तोभः' इति विशिष्टस्य तल्लक्षणत्वात् ; लोकेऽपि सभायां विप्रलम्भकेनोच्यमानं प्रकृतार्थानन्वितं कालक्षेपमात्रहेतुं शब्दराशिं स्तोभ इत्याचक्षते। तस्मादस्ति लक्षणम्" इति ॥

गाने वर्णलोपादीनां विषयाणां विचारः

अक्षरविकारस्तोभादिवत् वर्णलोपोऽपि क्वचिद् गीतिहेतुर्भवति, तल्लोपविषयश्च विचारो नवमाध्याये प्रथमपादस्याष्टादशाधिकरणेऽभिहितः—

'इरा गिरा विकल्पः स्यादुतैरैषा विशेषतः ।
आद्यो मैवं बाधपूर्वमिराया विहितत्वतः ॥'

ज्योतिष्टोमे श्रूयते 'यज्ञायज्ञीयेन स्तुवीत' ( ताण्ड्य ब्रा० ८ । ६ ) इति 'यज्ञायज्ञ' इत्यनेन शब्देन युक्तायामृच्युत्पन्नं साम यज्ञायज्ञीयम् ( गेयगान १ । ३२ ) तस्यामृचि गिराशब्दः पठ्यते 'यज्ञा यज्ञा वो अग्नये गिरा गिरा च दक्षसे, इति ( पू० आ० १।४।१ ) । तत्र सामगा योनिगानमधीयानाः सहैव गकारेण गायन्ति 'गायिरा गिरा' इति । ब्राह्मणे (ताण्ड्य ८।६ ) तु गकारलोपपूर्वकमाकारयकारादिकं गानं विधीयते 'ऐरं कृत्वोद्गेयम्' इति । गिराशब्दे गकारलोपादिराशब्दो भवति । इरायाः सम्बन्धि गानम् ऐरम् । तादृशं कृत्वा प्रयोगकाले तद्गानं कर्त्तव्यमित्यर्थः । तत्र योनिगानब्राह्मणयोः समानबलत्वेन विशेषाभावात् विकल्पेन प्रयोक्तव्यमिति प्राप्ते, ब्रूमः—

'न गिरा गिरेति ब्रूयाद्, यद् गिरा गिरेति ब्रूयाद् आत्मानमेव तदुद्गाता गिरेत्' ( ता० ब्रा० ८ । ६ ) इति गकारसहितगाने बाधकमुक्त्वा गकाररहितमिरापदं गेयत्वेत विधीयते, तत्पदादेरिकारस्य गानार्थमाकारो यकार इकारश्चेति त्रीन् वर्णान् प्रयुञ्जते, तत 'आयिरा' इत्येव गातव्यम्, ( उह्यगान २ प्रपा० १५ साम ) इति ।

इराशब्दस्य गानविधानम्

तत्रैवोपरितनाधिकारे कश्चिद्व विशेषश्चिन्तितः—

"इरापदं न गेयं स्याद् गेयं वा गीत्यनुक्तितः ।
न गेयं गीयमानस्य स्थाने पातात् प्रगीयते ॥

ब्राह्मणेन विहित इराशब्दो न गातव्यः, कुतः ? ऐरमिति शब्देन गीते-

रनुक्तत्वात् ; पाणिनीयेन 'विमुक्तादिभ्योऽण्' (अष्टा० ५।२।६१) इति सूत्रेण इराशब्दादण्प्रत्ययो मत्वर्थीयो विहितः, तथा सतीरापदोपेतं कृत्वेत्येतावानेवार्थो भवति। यदि प्रगीतेरापदसम्बन्धः तद्धितेन विवक्ष्येत, तदानीमाकारौ यकार ईकारो रेफ आकारश्चैतैः पञ्चभिर्वर्णैर्निष्पन्नमायीरारूपं गीयमानेराशब्दप्रातिपादिकं भवति। तादृशात् प्रातिपादिकात् पाणिनीयेन 'वृद्धाच्छः' [ अष्टा० ४।२।१०४ ] इति सूत्रेण प्रत्ययान्तरे सति, आयिरीयं कृत्वेति ब्राह्मणपाठो भवेत्। तस्मान्न गेयम् इति प्राप्ते, ब्रूमः— गीयमानस्य गिरापदस्य स्थाने इरापदं विधीयते इति पदमात्रस्य बाधः, गानन्तु न बाध्यते; किञ्च विमुक्तादि [ अष्टा० ५।२।६१ ] सूत्रेणाणप्रत्ययेऽपि, पूर्वस्मात् 'मतौ छः सूक्तसाम्नोः' [ अष्टा० ५ । २ । ५९ ] इति सूत्रात् सामानुवृत्तेरैरं सामेत्यर्थो भवति, सामत्वं च गीतिसाध्यम्, यदा तु 'तस्य विकारः' [ अष्टा० ४ । ३ । १३४ ] इत्यस्मिन्नर्थे अण् प्रत्ययः, तदानीमिराया विकार इति विग्रहे यथोक्तं गानं लभ्यते। तस्माद् गातव्यम्" इति ॥

**साम्नां देवतास्तुतिहेतुत्ववर्णनम्** बहुभिः प्रकारैर्गानात्मकं यत् सामस्वरूपं निरूपितम्, तस्यैव देवतास्तुतिहेतुत्वं नवमाध्यायस्य द्वितीयपादेऽष्टमाधिकरणस्य प्रथमवर्णके निर्णीतम्——

"ऋक्सामाभ्यां विकल्पेन स्तुतिः साम्नैव वाग्रिमः।
पुरेव मैवमृङ् निन्दासामप्राशस्त्यदर्शनात् ॥

क्वचित् कर्मविशेषे श्रूयते 'ऋचा स्तुवते', 'साम्ना स्तुवते' इति। तत्र, पूर्वन्यायेन विकल्पः इति चेत्? मैवम् 'ऋङ्निन्दासामप्रशंसयो वाक्यशेषेऽवगमात् 'यदृचा स्तुवते तदसुरा अन्ववायन्, यत् साम्ना स्तुवते तदसुरा नान्ववायन्, य एवं विद्वान्, साम्ना स्तुवीत' इत्यृचं निन्दित्वा साम प्रशस्य लिङ्प्रत्ययेन साम विहितं, तस्मात् साम्नैव स्तोतव्यम्" इति ॥

**साम्नामृचः प्रतिसंस्कारत्वव्यवस्था** तस्य च साम्नः ऋचं प्रति संस्कारकत्वं तस्मिन्नेव पादे द्वितीयाधिकरणे निर्णीतम्।

"सामर्चं प्रति मुख्यं स्याद् गुणो वा बाह्यपाठतः।[1]
मुख्यमभ्यसितुं पाठौ गुणो गीताक्षरैः स्तुतेः ॥

रथन्तरं गायतीत्यादौ यद्गानं विहितम् तदेव सामशब्दार्थं इति प्रतिपादितं स्मारितञ्च। तदेतद् गानमृचं प्रति प्रधानकर्म स्यात्, कुतः ?

---

१. साम्नां योनिभूता ऋचः छन्दसि आर्चिके पठ्यन्ते। तासां सामापरपर्यायाणि गानानि यत्र विद्यन्ते तद् योनिगानमित्याचक्षते। वेदसाम, वेदगानं, गेयगानमित्यपि तस्यापरं नाम।

यागप्रयोगाद् बहिरध्ययनकालेऽपि पठ्यमानत्वात्, गुणकर्मत्वे तु व्रीहिप्रोक्षणादिवद् यागमध्ये एव गानमनुष्ठीयेत, ततो बहिर्गानस्य विश्वजिदादिवत् फलं कल्पनीयम्। मध्यकालीनगानं तु प्रयाजादिवदारादुपकारकम् तस्मान्मुख्यमेतन्न तु गुणकर्म इति प्राप्ते, ब्रूमः—न तावद् बहिःपाठः प्रधानकर्मत्वं कल्पयितुं शक्नोति भूमिरथिकशुष्केष्टिन्यायेन प्रयोगपाटवाय गानाध्ययनोपपत्तेः (भूमिरथिको भूमौ रथमालिख्याभ्यासं करोति, यथा वा छात्रः शुष्केष्टया प्रयोगपाटवं सम्पादयति, तद्वत्)। नापि गुणकर्मत्वे प्रयोजनाभावात् प्रधानकर्मत्वमिति, वाच्यम्, गानेन संस्कृतैर्ऋगाक्षरैः स्तुतिसम्भवात्; 'आज्यैः स्तुवते' पृष्ठैः स्तुवते' इति स्तुतिविधानात्। तस्मादृगक्षराणां स्वरविशिष्टत्वाकाराभिव्यक्तिर्दृष्टं प्रयोजनमित्यदृष्टस्याकल्पनीयत्वाद् गानं संस्कारकर्म" इति॥

**ऊहग्रन्थस्य पौरुषेयत्वापौरुषेयत्वविचारः**

यथोक्तमृगक्षराणां संस्कारकं गीत्यात्मकं यत् साम तदेतदेकैकं छन्दोगा एकैकस्यामृचि 'वेदसाम' नामके ग्रन्थेऽधीयन्ते। ऊहनामके तु ग्रन्थे एकैकं साम तृचेऽधीयते सोऽयमूहग्रन्थः तस्मिन्नेव पादे प्रथमाधिकरणस्य द्वितीयवर्णके विचारितः—

"ऊहग्रन्थोऽपौरुषेयः पौरुषेयोऽथवाऽग्रिमः।
वेदसामसमानत्वाद् विधिसार्थत्वतोऽन्तिमः॥

यस्मिन् ग्रन्थे सामगास्तृचे तृचे सामकैकं गायन्ति सोऽयमूहग्रन्थो नित्यो न तु पुरुषेण निर्मितः, कुतः? अनध्यायवर्जनेन कर्त्तरस्मरणेनाध्यापकानां वेदत्वप्रसिद्धया च वेदसामनामकयोनिग्रन्थसदृशत्वात्; इति चेत्? मैवम्, अपौरुषेयत्वे विधिवैयर्थ्यप्रसङ्गात् 'यद्योन्यां तदुत्तरयोर्गायति' इति विधीयते।

अयमर्थः—अपौरुषेयत्वेन सम्प्रतिपन्ने वेदसामनामके ग्रन्थे 'कया नश्चित्र आ भुवत्' इत्येतस्यां ( उत्तरार्चिकस्य १ पा० १२ सू० १ सू० ) योन्यामेककस्यामृचि यद् वामदेव्यनामकं सामोपदिष्टं तदेवोत्तरयोर्ऋचोः 'कस्त्वा सत्योमदानाम्' ( उ० आ० १।१२।२ ) 'अभी षुणः सखीनाम्' ( उ० आ० १।१२।३ ) इत्यनयोः द्वितीयतृतीययोर्गातव्यम् इत्ययं विधिरूहग्रन्थस्य वेदत्वे व्यर्थः स्यात्, 'वेदसाम' वदध्ययनादेव तत्सिद्धेः। उपरितनऋग्द्वये सामोहस्य पौरुषेयत्वेऽपि सामस्वरूपस्य तदाधारभूतानाम् तिसृणामृचां च वेदत्वादनध्यायाः वर्जनीयाः, कर्त्तुरस्मरणं जीर्णकूपारामादिष्विव चिरकालव्यवधानादुपपन्नम्। अस्मरणमूलैवाध्यापकानां वेदत्वप्रसिद्धिः यथा बह्वृचामध्यापका महाव्रतप्रयोगप्रतिपादकमाश्वलायननिर्मितं कल्पसूत्रमारण्येऽधीयमानाः पञ्चममारण्यकमिति वेदत्वेन

व्यवहरन्ति, तद्वत् ; न च तस्यापि वेदत्वमस्त्विति वाच्यम्, प्रथमारण्यकेन पुनरुक्तत्वात्, अर्थवादराहित्येन ब्राह्मणसादृश्याभावाच्च। तस्मात् पञ्चमारण्यकवदूहः पौरुषेयः; पौरुषेयस्य च न्यायामूलत्वात् यत्र वक्ष्यमाणन्यायविरोधस्तदप्रमाणम्" इति ।।

**एकं साम तृचे क्रियते स्तोत्रियमिति विधानमूलको विचारः तृचे करणप्रकारश्च**

तत्रैव केचिद् विशेषास्तृतीयचतुर्थपञ्चमषष्ठाधिकरणैर्बहुवर्णकोपेतैर्विचारिताः । तत्र-तृतीयाधिकरणम्—

'अंशैः सामर्क्षु कृत्स्नं वा प्रत्यृचं तिसृभिः श्रुतेः ।
अंशैर्मैवं स्तुतेरंशैरसिद्धेः प्रत्यृचं भवेत् ।।

'एकं साम तृचे क्रियते स्तोत्रियम्' इति, श्रूयते। तत्र त्रेधा विभक्तेषु सामांशेषु एकैकोऽशः एकैकस्यामृचि गातव्यः, कुतः ? एकस्य साम्नः तिसृभिर्ऋग्भिर्निष्पादनस्य श्रवणात्; इति प्राप्ते ब्रूमः—स्तोत्रियमिति स्तुतिनिष्पादकत्वं कृत्स्नस्य साम्नो विधीयते, न तु सामांशानाम्। स्तुतिर्नाम गुणकथनपरमेकं वाक्यम्, तच्च वाक्यमेकस्यामृचि सम्पूर्णम्। ततः कृत्स्नेन साम्ना तद् वाक्यं संस्कार्यमिति प्रत्यृचं सामाभ्यसनीयम्। तथा सति द्वितीमतृतीययोर्ऋचोस्तस्यैव साम्न आवर्त्तमानतया सामान्तरत्वाभावाद् ऋक्त्रयनिष्पाद्यत्वमविरुद्धम्; तस्मात् प्रत्यचं कृत्स्नं साम समापनीयम्"—इति ।।

**शरलेशविषयको विचारः**

चतुर्थाधिकरणम्—

"तिसृष्वृक्षदितं साम विषमासु समासु वा ।
यथेच्छानियमादन्त्यः शरलेशापनुत्तये ।।

विषमच्छन्दस्कासु समच्छन्दस्कासु वा तिसृष्वृक्षु स्वेच्छया साम गातव्यम्, इत्थमेवेतिनियामकस्य कस्यचिदभावात् इति चेत् ? मैवम्, शरलेशप्रसङ्गस्य नियामकत्वात्। शरो हिंसा, लेशोऽल्पत्वम्, 'शॄ' हिंसायाम्, 'लिश्' अल्पीभावे, इत्येतद्धातुद्वयदर्शनात्। यद्यधिकच्छन्दस्कायां योनौ उत्पन्नं साम, न्यूनच्छन्दस्कयोर्गीयेत, तदा सामभागेनैव तत्पूर्त्तेरवशिष्टसामभागाश्रयाभावाद्धिस्येत; यदि योनेरप्यधिकच्छन्दस्कयोर्गीयेत, तदा साम्नोऽल्पत्वादवशिष्ट ऋग्भागः सामरहितः स्यात्; तस्मात् समानच्छन्दस्कास्वेव गातव्यम्"—इति ।

**छन्दःस्थयोरुत्तरास्थयोर्वा ऋचोरूहनमिति विचारः**

पञ्चमाधिकरणे प्रथमवर्णकम्—

"छन्दःस्थयोरुत्तरास्थयोर्वा गीतेरिहोहनम् ।
अविशेषाद् विकल्पः स्यादन्त्यः संज्ञाबलित्वतः ।।

सामगानामृक्पाठाय द्वौ ग्रन्थौ विद्येते, 'छन्दः' 'उत्तरा' चेति। तत्र छन्दोनामके ग्रन्थे नानाविधानां साम्नां योनिभूता एवर्चः पठिताः ।

उत्तराग्रन्थे तृचात्मकानि सूक्तानि पठितानि एकस्मिंस्तृचे छन्दोगता योन्यृक् प्रथमा, इतरे द्वे उत्तरे।

एवं स्थिते सति रथन्तरमुत्तरयोर्गायति, यद्योन्यां तदुत्तरयोर्गायतीत्यत्र द्विविधे उत्तरे सम्भाविते, रथन्तरस्य छन्दोग्रन्थे ऽभि त्वा शूरेतीयमृग् योनित्वेन पठिता, तस्या उपरि त्वामिद्धिहवामह इत्यादयः बृहदादिसाम्ना योनयः पठिताः [ ३ प्र० १ ख० १ ऋ० ], उत्तराग्रन्थे 'अभि त्वा शूरेति' सूक्ते (१।११) तस्या ऋच ऊर्द्ध्वं 'न त्वा अन्यो दिव्यो इत्येषा' [२।११।२] साम्नः कस्याप्ययोनिभूता पठिता। तत्र छन्दोग्रन्थापेक्षया सामान्तरयोर्योनी द्वे रथन्तरस्य स्वयोन्युत्तरे भवतः, उत्तराग्रन्थापेक्षया तृचगते द्वितीयतृतीये स्वयोन्युत्तरे भवतः। तत्र विशेषनियामकाभावात् ययोः कयोश्चिदुत्तरयोर्गानमिति चेत्? मैवम्, उत्तरेति संज्ञा सहसा बुद्धिस्था भवति प्रतियोगिनिरपेक्षत्वात्। पूर्वपठितां योनिमृचमपेक्ष्य यदुत्तरात्वं तद्विलम्बेन प्रतीयमानत्वाद् दुर्बलम्। ईदृशमेवोत्तरात्वं छन्दसि पठितयोः स्वयोन्युत्तरभाविन्योः सामान्तरयोन्योर्द्वयोर्ऋचयोः, तृचगतयोस्तु द्वितीयतृतीययोरुत्तरात्वं संज्ञया वर्त्तते, अतस्तयोरेव गानम्। एवं सति पूर्वाधिकरणे निर्णीतं समास्वेव गानमनुगृहीतं भवति। किञ्च तृचात्मकेषु सूक्तेषु या प्रथमा योनिभूता तन्नाम्ना छन्दोग्रन्थस्य 'योनिग्रन्थः'–इति अध्यापकानां समाख्या। इतरस्य तु तृचसङ्घरूपस्य ग्रन्थस्योपरितनयोर्ऋचोर्नामधेयेन 'उत्तरा' इति समाख्या। स एव ग्रन्थः कर्माङ्गसमर्पकं प्रकरणं, पञ्चदशसप्तदशादिस्तोमानां तृचेष्वेवोत्पत्तेः। तस्मादुत्तराग्रन्थयोस्तृचगतयोर्द्वितीयतृतीययोरयमूहः" इति ॥

त्रैशोकसामोहन- द्वितीयवर्णकम्—
विचारः

"त्रैशोकेऽतिजगत्यौ द्वे आनेये गीतयेऽथवा।
बृहत्वा वादिमः साम्यान्नोत्तरात्वं श्रुतेर्बलात् ॥

द्वादशाहे चतुर्थेऽहनि त्रैशोकनामकं साम [ ऊह २ प्र २ अ १३ ] विहितम्, तच्च विश्वाः पृतना [ ५।१४।१। ] इत्येतस्यामतिजगत्यामुत्पन्नम्। तस्मिंश्च तृचे तस्या योनेरुत्तरे द्वे बृहत्यौ 'नेमिं न यन्तीत्यादिके' [ ५।१४।२–३ ] आम्नाते। तत्र बृहत्यावुपेक्ष्य तयोः स्थाने द्वे उत्पत्तिसिद्धे अतिजगत्यौ आनीय तासु तिसृषु गेयम्; तथा सति समासु गानं पूर्वत्र निर्णीतमनुगृह्येत, 'अति जगतीषु स्तुवन्ति'–इति [ताण्डच ब्रा० १२।१०] श्रयमाणम् अतिजगतीबहुत्वम् अन्यथा नोपपद्येतेति चेत्? मैवम्, उत्तरोर्गायतीत्युक्तस्य संज्ञारूपस्योत्तराशब्दस्याधीयमानयोर्बृहत्योर्मुख्यत्वात्, श्रुतिश्च बहुललिङ्गात् 'समासु गानम्'–इति न्यायाच्च बलीयसी। यदेतदतिजगतीबहुत्वं तद् बृहत्योः स्वीकारेऽप्युप-

पद्यते, एकविंशस्तोमस्यात्र विहितत्वेन तत्सिद्धये प्रथमायाः अतिजगत्याः सप्तकृत्व आवर्त्तनीयत्वात् । तस्मात् त्रैशोकं साम बृहत्योरूहनीयम्"–इति ।

**विषमच्छन्दस्कयोरुत्तरयो-** षष्ठाधिकरणे प्रथमवर्णकम्––

**र्गानप्रकारः** "रथन्तरे ककुब् ग्राह्या ग्रथ्या वाद्योऽर्थवत्वतः ।
पुनः पदाप्रसिद्धचादेरन्त्योऽर्थोऽन्यत्र वीक्ष्यताम् ॥

इदमाम्नायते [ ताण्डच ७।७ ] 'न वै बृहद्रथन्तरमेकच्छन्दः यत्तयोः पूर्वा बृहती ककुभावुत्तरे' इति । अयमर्थः–बृहद्रथन्तरं तदेतत् सामद्वयमितरसामवदेकच्छन्दस्कं न भवति, यस्मात् कारणात् तयोर्बृहद्रथन्तरसाम्नोराश्रयभूतास्वृक्षु पूर्वा बृहतीछन्दस्का [ ३।१२।१ ] उत्तरे तु द्वे ऋचौ [ ३।१२।१ ] ककुब्छन्दस्के । इतरेषां वामदेव्यादिसाम्नामाश्रये तृचे अवस्थिताः तिस्र ऋचः एकच्छन्दस्काः उत्तराग्रन्थे आम्नाताः [ १।१२ ] संशरविलेशपरिहाराय 'समासु गायेत्'–इति न्यायेन निर्णीता एव । इह तु वाचनिकं विषमच्छन्दस्कासु गानमिति तत्र रथन्तरस्याश्रयतया तृचो नोत्तराग्रन्थे समाम्नातः, किन्तर्हि ? प्रगाथस्तदाश्रयत्वेनाम्नातः । स च द्वाभ्यामृग्भ्यां निष्पन्नत्वात् द्वचचो भवति, तयोश्च द्वयोर्ऋचोः 'अभि त्वा शूरेत्येषा' [ १।१।११ ] प्रथमा, सा च बृहती । 'न त्वा वा अन्यो दिव्यो' इत्येषा [ १।११।२ ] द्वितीया सा च पंक्तिच्छन्दस्का । तथा च सति तां पंक्तिच्छन्दस्कामपनीय तस्याः स्थाने दाशतयीगते द्वे उत्पत्तिककुभौ ऋचौ गृहीतव्ये, कुतः ? अर्थवत्वात् । उदाहृतेन ककुभावुत्तरे, इति वाक्येन रथन्तरसाम्नः आश्रयत्वेन ककुभोर्विनियुज्यमानयोः ककुबुत्पत्तिरर्थवती भवति, अन्यथा वैयर्थ्यं स्यात् । किञ्च आम्नाताया एकस्याः पंक्तेः स्वीकारे सति ऋचोर्द्वयोरेव लाभात् 'एकं साम तृचे क्रियते स्तोत्रियम्'–इति वचनं विरुध्येत । तस्माद्रथन्तरसाम्नि द्वे ककुभावुत्तरे गृहीतव्ये । अयमेव न्यायो बृहत्सामन्यपि योजनीयः इति प्राप्ते, ब्रूमः––आम्नातयोर्बृहतीपंक्त्योरेव ककुब् ग्रथनीया । तथाहि अभि त्वा शूरेत्येषा बृहती प्रथमा स्तोत्रिया, तस्यामविकृतायामेव रथन्तरं गातव्यम् । ततस्तस्यामृचि चतुर्थं पादं पुनरुपादायोत्तरस्याः पंक्तेः पूर्वार्द्धेन सह योजनीयम्, सेयमष्टाविंशत्यक्षरा त्रिपदा द्वितीया स्तोत्रिया, सा चैका ककुप् सम्पद्यते । तस्यां ककुभि चरमं पादं पंक्तेरुत्तरार्द्धेन सह प्रग्रथ्य तृतीया स्तोत्रिया कर्त्तव्या, स च द्वितीया ककुप् सम्पद्यते । प्रग्रथनप्रकारेण द्वयोर्ऋचोराम्नातयोः तृचनिष्पत्तेर्नास्त्युक्तो वचनविरोधः । अस्मिश्च ग्रथने 'पुनःपदा' इति श्रोतोक्तिर्लिङ्गम्, तथा च श्रूयते 'एषा वै प्रतिष्ठिता बृहती या पुनःपदा तद् यत् पदं पुनरारभते तस्माद् वत्सो मातरभिहिंकरोति' इति । अयमर्थः–या बृहती पुनःपदा भवति, सैषा प्रतिष्ठिता स्थिरा भवति;

पदं चतुर्थः पादः, सोऽप्यृगन्तरसम्पादनाय पुनः पठ्यते, ततः सा बृहती पुनःपदा, सेयमृङ् माता, तस्या पादो वत्सः; तथा सति यस्मादत्र चतुर्थं पादमुद्गाता पुनरारभते तस्माद् वत्सो मातरमभिवीक्ष्य हिमिति शब्दं करोतीति ।

न केवलं लिङ्गमात्रेण प्रग्रथनं, किन्तु छन्दोगानां प्रसिद्ध्यापि; ते ह्येवं स्मरन्ति 'काकुभः प्रगाथः' इति । किञ्च प्रगाथशब्दार्थपर्यालोचनेनापि ग्रथनं गम्यते । प्रकर्षेण ग्रथनं यत्र स प्रगाथः । प्रकर्षो नाम आम्नातादृक्-पाठादाधिक्यम् । तच्च पूर्वोक्तरीत्या पादाभ्यासपुरःसरमृगन्तरसम्पादनेनो-पजायते । तस्मान्नोत्पत्तिककुभौ ग्रहीतव्ये, किन्तर्हि ? प्रग्रथनेन द्वे उत्तरे ककुभौ सम्पाद्य तासु तिसृषु रथन्तरं गातव्यम् । तथा बृहदपि । एवं सति पंक्ते पाठः सार्थो भवति; नचैवं ककुबुत्पत्तिवैयर्थ्यमिति शङ्कनीयम्, वाच-स्तोमे तदुपयोगात् ; तस्मान्न कापि प्रग्रथने अनुपपत्तिः" इति ॥

**बृहतीविष्टारपङ्क्त्योः प्रग्रथनविशेषेण द्वयोर्बृहत्योः सम्पादनम् ।**

द्वितीयं वर्णकम्—

"यौधाजये रौरवे च बृहत्योरागमोऽथवा ।
ग्रथनं पूर्ववत् पक्षौ षष्टिलिङ्गमिहोच्यते ॥

इदमाम्नायते 'रौरवयौधाजये बार्हते तृचे भवतः' इति [ ताण्ड्य ब्रा० ७ । ३ ] अयमर्थः रौरवनामकं किञ्चित् साम [ ऊहगान १ । २ ] तथा, यौधाजयनामकमपरम् [ऊहगान १ । ३] तयोः साम्नोर्बृहतीच्छन्दस्कस्तृच आश्रय इति । उत्तराग्रन्थे तु तस्य सामद्वयस्याश्रय एकः प्रगाथः आम्नातः, तस्मिंश्च प्रगाथे 'पुनानः सामेत्यसावृक् प्रथमा, सा च बृहती; दुहान ऊर्धद्-व्यमिति द्वितीया, सा तु विष्टारपङ्क्तिः । तामेतां विष्टारपंक्तिमपनीय तस्याः स्थाने उत्पत्तिबृहत्यौ द्वे ऋचौ आनेतव्ये इति पूर्वपक्षः । बृहतीविष्ठार-पंक्तयोः प्रग्रथनविशेषेण द्वे बृहत्यावुत्तरे सम्पादनीये इति राद्धान्तः । तत्रो-भयत्र युक्तिः पूर्वन्यायेन द्रष्टव्या । लिङ्गं त्वेवमाम्नायते 'षष्टिस्त्रिष्टुभो माध्यन्दिनं सवनम्' इति, अयमर्थः रौरवयौधाजयनामके सामनी माध्यन्दिने सवने गीयेते । तस्मिंश्च सवने त्रिष्टुप्छन्दस्का ऋचः षष्टिर्भवन्तीति, सेयं षष्टिसंख्या प्रग्रथनपक्षे उपपद्यते । तथाहि, माध्यन्दिने सवने पव-मान एकः पृष्टस्तोत्राणि चत्वारि । पवमाने त्रीणि सूक्तानि । उच्चाते-जातमित्येकं सूक्तम्, तत्र गायत्र्यस्तिस्र ऋचः; पुनानः सोमेति द्वितीयं सूक्तम् । तच्च प्रगाथ रूपम्, तत्र पूर्वा बृहती उत्तरा विष्टारपंक्तिः; 'प्रतुद्रव परि कोशमिति' तृतीयं सूक्तम्, तत्र त्रिष्टुभस्तिस्रः । पृष्ठ-स्तोत्रेषु 'अभि त्वा शूरेति' प्रगाथरूपं प्रथमं सूक्तम् । तत्र पूर्वा बृहती उत्तम विष्टारपक्तिः, 'कया नश्चित्र' इति द्वितीयं, तत्र तिस्रः गायत्र्यः । तं वोदस्ममृतीषहमिति तृतीयं प्रगाथरूपं, तत्र बृहतीपंक्त्यौ । 'तरोभिर्वो विदद्वसुमिति' प्रगाथरूपं चतुर्थः तत्रापि बृहतीपंक्त्यौ । एवमन्यस्मिन्

सवने सप्त सूक्तानि । तेषु नव सामानि गेयानि । प्रथमे सूक्ते गायत्रमामहीयवं चेति द्वे सामनी, द्वितीये रौरवं योधाजयं च, तृतीये औशनम्, चतुर्थे रथन्तरम्, पञ्चमे वामदेव्यम्, षष्ठे नौधसम्, सप्तमे कालेयम् । तत्र, प्रथमसूक्तस्य सामद्वयनिष्पत्तये द्विरावृत्तावाश्रयभूता ऋचः षड् गायत्र्यो भवन्ति, पञ्चमसूक्तगता वामदेव्यसामाश्रयभूताः तिस्रः ऋचः सप्तदशस्तोमसिद्धयर्थमावर्त्यमानाः सप्तदश गायत्र्यः इत्येवं मिलित्वा त्रयोविंशतिर्गायत्र्यः । षष्ठे सूक्ते बृहतीपङ्क्तौ प्रग्रथनेन बार्हतस्तृचो भवति, यथा सप्तमेऽपि, तत्रोभयत्र सप्तदशस्तोमे सति चतुस्त्रिंशद् बृहत्यो भवन्ति; द्वितीयसूक्तेऽपि प्रग्रथनेन बार्हतं तृचं सम्पाद्य सामद्वयार्थमावृत्तौ षड् बृहत्यो भवन्ति । चतुर्थसूक्ते रथन्तरसामार्थं पूर्ववर्णकोक्तरीत्या प्रग्रथने सति ककुभावुत्तरे भवतः, प्रथमा तु स्वतःसिद्धबृहती तत्र सप्तदशस्तोमे सति पञ्च बृहत्यो द्वादश ककुभश्च सम्पद्यन्ते । तस्य च स्तोमस्य विधायकं ब्राह्मणमेवमाम्नायते—'पञ्चभ्यो हिङ्करोति स तिसृभिः स एकया स एकया, पञ्चभ्यो हिङ्करोति स एकया स तिसृभिः स एकया, सप्तभ्यो हिङ्करोति स एकया स तिसृभिः स तिसृभिः इति ( ताण्डच २ । ७ )

अयमर्थः—एका स्वतःसिद्धा बृहती, प्रग्रथिते द्वे ककुभावित्येवं विधस्तृचस्त्रिभिः पर्य्यायैरावर्त्तनीयः, प्रथमे पर्याये त्रिर्बृहती गातव्या, सकृत् सकृत् ककुभौ, द्वितीये पर्याये सकृद बृहती त्रिवारमन्तरा ककुप् सकृदन्त्या । तृतीये पर्याये सकृद् बृहती, त्रिस्त्रिः ककुभाविति । हिङ्करोति हिङ्कारोपलक्षितं गानं कुर्यादित्यर्थः । तदेवं तृतीयसूक्तव्यतिरिक्तेषु षट्सु सूक्तेषु त्रयोविंशतिगायत्र्यः पञ्चचत्वारिंशद् बृहत्यो द्वादश ककुभः सम्पन्नाः, तत्र ककुप् अष्टाविंशत्यक्षरा, तस्यां षोडशाक्षरे गायत्रीपादद्वये योजिते चतुश्चत्वारिंशत्यक्षरा त्रिष्टुप् सम्पद्यते । अनया दिशा द्वादशानां ककुभां त्रिष्टुप्त्वसम्पादनाय चतुर्विंशतिर्गायत्रीपादा योजनीया; तथा सत्यष्टौ गायत्र्यो गताः, पञ्चदश गायत्र्योऽवशिष्यन्ते । तासां पञ्चचत्वारिंशत् पादाः, तांश्च तावतीषु बृहतीषु संयोज्य त्रिष्टुभः सम्पादनीयाः । तत एताः पञ्चचत्वारिंशत् ककुप्सु निष्पन्नाः द्वादश । तृतीये सूक्ते स्वतःसिद्धा तिस्रः इत्येवं प्रग्रथनपक्षे षष्टिस्त्रिष्टुभ उत्तराग्रन्थे समाम्नाता इव लभ्यन्ते । उत्पत्तिबृहत्यानयने तु प्रकरणाम्नातानां तावतीनामलाभात् प्रकृतहानाप्रकृतकल्पने प्रसज्येयाताम् । तस्मात् त्रिष्टुभः षष्टिरित्येतद् बृहतीप्रग्रथनस्य लिङ्गम् । प्रग्रथनप्रकारस्त्वभिधीयते—पुनानः सोमेत्यस्या बृहत्याश्चतुर्थपादं पुनरुपादाय द्विरभ्यस्य दुहान उधर्दिव्यमित्यस्या विष्टारपङ्क्ते पूर्वार्द्धेन संयोजयेत्, सा बृहती भवति; एतदीयं चतुर्थं पादं द्विरभ्यस्योत्तरार्द्धेन योजयेत्, सापि बृहती भवति; तस्माद् यौधाजयरौरवयोर्बृहत्यौ उत्तरे प्रग्रथनीये । एवं नौधसकालेययोरपि द्रष्टव्यम्" इति ॥

षड्भिर्गायत्रीभि-स्तिसृणां जगतीनां सम्पादनादिकम्

तृतीयवर्णकम्—

"श्यावाश्वान्धीगवेऽनष्टु नेये ग्रथ्यतेऽथवा।
पुरेव लिङ्गं जगती चतुर्विंशतिकीर्तनम्॥

इदमाम्नायते—'पञ्चछन्दा आवापः आर्भवः पवमान सप्तसामा, गायत्र-संहिते गायत्र्ये तृचे भवतः, श्यावाश्वान्धीगवे आनुष्टुभे तृचे भवः, उष्णिहि सफम्, ककुभि पौष्कलम्, कावमन्त्यं जगतीषु' इति। अयमर्थः—अस्ति तृतीयसवने पवमानः आर्भवसंज्ञकः, तस्मिन् पञ्च सूक्तानि, सप्त सामानि। 'स्वादिष्ठया मदिष्ठया' इत्येकं सूक्तम् [ उ० आ० १। १५ ], तस्मिन् गायत्र्यस्तिस्र ऋचः तासु 'गायत्रं' 'संहितं' [ऊ० गा० १।८] चेति द्वे सामांनी। 'पुरोजितीवो अन्धसः' इति सूक्तान्तरम् [उ० आ० १।१८] तत्रैकानष्टुबुत्तरे द्वे गायत्र्यौ। तासु 'श्यावाश्वम्' [ऊ० गा० १ प्र, ११] 'आन्धीगवं' [ऊ० गा० १प्र, ११] चेति द्वे सामनी; 'इन्द्रमच्छ सुता' इत्यपरं सूक्तम् [ उ० आ०, १ प्र, १७ ] तस्मिन्नुष्णिहस्तिस्रः तासु 'सफं' साम। 'पवस्व मधुमत्तम' इति प्रगाथः [उ० आ० १। १६], तस्मिन् पूर्वा ककुप्, उत्तरा पंक्तिः 'तत्र पौष्कलं'। 'अभिप्रियाणि पवते च नोहितः' इत्यन्तं सूक्तम् [उ० आ० १।१६] तत्र तिस्रो जगत्यः तासु 'कावं' [ ऊह, १ प्र १३ ] साम। एतेषां पञ्चानां मध्ये, 'पुरोजिती वः,' 'पवस्व' इत्यनयोः सूक्तयोः यद्यपि द्वे द्वे छन्दसि, तथापि समासु गानं निष्पादयितुं प्रग्रथने कृते सति एकमेव छन्दः सम्पद्यते, ततो गायत्र्यानुष्टुबुष्णिक्कुब्जगतीभिः पञ्चच्छन्द आर्भव पवमानोऽस्मिन् सवने आवपनीय इति। तत्र 'पुरो जितीवः' इत्यस्मिन् सूक्ते श्यावाश्वमान्धीगवं च समासु गातुमुत्तरे गायत्र्यावाम्नाते परित्यज्य द्वे उत्पत्यनुष्टभौ नेतव्ये इति पूर्वपक्षः। चतुर्थं पाद पुनरुपादाय द्वे अनुष्टुभौ प्रग्रथनीये इति राद्धान्तः।

तत्रोभयत्र पूर्ववर्णकद्वयन्यायेन युक्तिर्द्रष्टव्या। लिङ्गं त्वेवमाम्नायते 'चतुर्विंशतिर्जगत्यस्तृतीय सवन एकां च ककुबिति' सेयं सङ्ख्या प्रग्रथनपक्षे उपपद्यते। तथाहि गायत्रसंहितयोः साम्नोराश्रये गायत्रे तृचे द्विरभ्यस्ते सति षट् गायत्रो भवन्ति। चतुर्विंशत्यक्षरा गायत्री, अष्टाचत्वारिंशदक्षरा जगति। ततः षड्भिः गायत्रीभिः तिस्रो जगत्य भवन्ति, श्यावाश्वान्धीगवयोराश्रयभूताः प्रग्रथिता, द्विरभ्यस्ताः षनुष्टुभो भवन्ति। ताभिश्च तिस्रो जगत्यो भवन्ति मिलित्वा सप्त जगत्यः सम्पन्नाः। सफस्य पौष्कलस्य च सामान्तरवत्तृचे गानं न कर्त्तव्यम् किन्त्वेकैकस्यामृचि। तत् कुतोऽवगम्यते ? उष्णिहि ककुभीति सप्तम्येकवचनान्ताभ्यां विशेषविधानात् [ ताण्ड्य ८ प्रपा० ]। अष्टाविंशत्यक्षरयोरुष्णिक्ककुभोरेका जगती गायत्रीपादश्च सम्पद्यते। ककुभि मध्यमः पादो द्वादशाक्षरः उष्णिहि च परः पादः इति तयोर्भेदः। कावस्याश्रयभूताः स्वतःसिद्धा तिस्रो जगत्य इति मिलित्वा पवमानेऽस्मिन्ने-

कादश जगत्यो भवन्ति, गायत्रीपादश्चातिरिच्यते। आर्भवपवमानवत्तृतीय-सवने यज्ञायज्ञीयस्तोत्रमेकमस्ति। तस्य चाश्रयः 'यज्ञा यज्ञा वो अग्नये' इत्यसौ प्रगाथः ( उ० आ० १।१० ), तत्र पूर्वा बृहती उत्तरा विष्टारपंक्तिः। तयोः प्रग्रथनेन ककुभावुत्तरे कर्त्तव्ये। तत्रैकविंशस्तोमः तस्य विधायिका विष्टतिरेवमानायते—'सप्तभ्यो हिं करोति स तिसृभिः स तिसृभिः स तिसृभिः, सप्तभ्यो हिं करोति स तिसृभिः स एकया स तिसृभिः' इति। अयमर्थः—प्रथमायाः बृहत्यास्त्रिषु पर्यायेषु त्रिवारमेकवारं पुनस्त्रिवारमिति सप्त बृहत्यः, मध्यमायाः ककुभः प्रथमद्वितीययोः पर्याययोस्त्रिस्त्रिः पाठः, अन्त्ये सकृत्, उत्तमायाः ककुभः आदौ सकृत् द्वितीयतृतीययोस्त्रिस्त्रिः, एवं चतुर्दश ककुभः। तासु ककुप्सु द्वादशाक्षराः मध्यमपादाश्चतुर्दश, तेषु सप्तपादाः सप्तसु बृहतीषु योजनीयाः, ततः सप्त जगत्यो भवन्ति, अवशिष्टा अष्टाक्षराः ककुभामाद्यपादा अन्त्यपादाश्च, मिलित्वाष्टाविंशतिः। तेषु षड्भि पादौ; एका जगतीत्यनेन क्रमेण चतुर्विंशतिपादैश्चतस्रो जगत्यो भवन्ति; ये तु द्वादशाक्षराः सप्तपादाः पूर्वमवशिष्टाः तेषु पवमानशेषोऽष्टाक्षरः पादो योजनीयः, ककुभांशेष्वेष्वष्टाक्षरेषु पादेषु चत्वार्य्यक्षराणि योजनीयानि, ते द्वे जगत्यौ भवतः; तदेवं यज्ञायज्ञीयस्तोत्रे त्रयोदश जगत्यः पूर्वोक्ताः पवमानगता एकादशेति चतुर्विंशतिर्जगत्यः. चतुरक्षरवर्जिताश्चत्वारोऽष्टाक्षरपादाः मिलित्वा ककुभेका भवति अनेन लिङ्गेन श्यावाश्वमान्धीगवं च प्रग्रथिततृचे गातव्यम्, न तु तत्रोत्पत्त्यनुष्टुबानयनमिति स्थितम्" इति॥

पादप्रग्रथने विचारः

चतुर्थवर्णकम्—

"चतुःशते प्रग्रथनमृचः पादस्य वाग्रिमः।
तृचे मुख्यत्वतो नैवमृगन्यत्वस्य वर्णनात्॥

गवामयने ब्रह्म साम विहितम् 'अभिवर्तो ब्रह्मसाम भवति' इति। तत्प्रकृत्य श्रूयते 'चतुःशतमैन्द्रा बार्हताः प्रगाथाः' इति ( लाट्या०सू० १०।३ )। चतुरुत्तरशतसङ्ख्याकाः इन्द्रदेवताकाः बृहतीच्छन्दस्काः, ऋगद्वयात्मकाः, तेष्वेकप्रगाथगते द्वे ऋचौ द्वितीयप्रगाथगतामेकामृचं च प्रग्रथ्य तृचे 'अभिवर्त्त'—नामकं साम गातव्यम्। तथा सत्याम्नातानामविकृतानामेव तिसृणामृचां लाभात् तृचस्य मुख्यत्वं भवति, पूर्वोक्तरीत्या पादप्रग्रथने तु विकृतत्वादमुख्यस्तृचः स्यात् इति प्राप्ते, ब्रूमः—अन्याः अन्याः ऋचो भवन्ति तदेव सामेत्यृचामन्यत्वमत्र वर्ण्यते। तच्च पादप्रग्रथने सम्भवति, ऋक्प्रग्रथने तु येयमृक् पूर्वस्य तृचस्यान्त्या सैवोत्तरस्य तृचस्याद्येत्यन्यत्वमृचः न स्यात्। तस्मात् पादस्य प्रग्रथनम्" इति॥

यद् योन्यां तदुत्तरयोर्गायती- ति विधानमूलको विचारः- स्तथाकरणप्रकारश्च

तत्रैव नवमदशमयोरधिकरणयोः अपरविशेषौ चिन्तितौ। नवमाधिकरणम्—

"आइभावो योनिवशादुत्तरावशतोऽथवा।
गीत्यर्थत्वादादिमोऽन्त्यो वर्णाभिव्यञ्जकत्वतः॥

'यद्योन्यां तदुत्तरयोर्गायति' इति श्रूयते, तत्र 'कया नश्चित्र आभुवत्' (उ० आ० १।१२।१) इति इत्यसावृग्योनिः। तस्यामृचि 'कया' इत्क्षरद्वय-माद्यो भागः, नश्चित्र आभुवदित्यक्षरषट्कं द्वितीयो भागः। तस्मिन् भागे द्वितीयाक्षरे चकारस्योपरितनमिकारं विलोप्य तस्य स्थाने आइभाव-माम्नाय गीतिर्निष्पादिता। 'कस्त्वा सत्योमदानामि' त्यनन्तर्भाविन्युत्तरा, (उ० आ० १।१२।२) तस्यां योनिन्यायेन चतुर्थाक्षरे नकारस्योपरितनं यकारमोकारं च लोपयित्वा तयोः स्थान आइभावः कार्यः। 'अभी षु णः' असावपरोत्तरा (उ० आ० १।१२।३)। तस्यामपि चतुर्थाक्षरे णकार-स्योपरितनं सकारं लोपयित्वा तस्य स्थाने आइभावः कर्त्तव्यः, अन्यथा गीतिनाशप्रसङ्गात् इति प्राप्ते, ब्रूमः—नात्र योनौ वर्णान्तरस्यागमः, किन्तर्हि ? विद्यमान एव चकारस्योपरितनः इकारः सामप्रसिद्धया प्रक्रियया वृद्धः सन्नैकारो भवति, तस्य सन्ध्यक्षरत्वात्, 'अकारः पूर्वो भागः, ईकारः उत्तर भागः', तावुभौ विश्लेषेण गीयमानौ आइभावं प्रतिपद्येते, तथा च सामगा आहुः 'वृद्धं तालव्यमाइ भवति' इति तथा सत्युत्तरयोश्चतुर्थाक्षरे नास्ति तालव्य इकारः इत्याइभावः न कर्त्तव्यः। 'अभि षु णः सखीनामविता जरितॄणाम्' इत्येतस्यामुत्तरायां द्वादशाक्षरगतस्य रेफस्योपरितनः इकारः पूर्ववदाइ भवति। तथा सोऽयमाइभावः उक्तरीत्या वर्णाभिव्यञ्जकत्वादुत्तरा-गतवर्णवशेन कर्त्तव्यः, गीत्यर्थत्वाभावेन योनिक्रमे तेन विनापि गीति-र्विनश्यति" इति।

उत्तरयोः स्तोभाति- देशकथनम्

दशमाधिकरणम्—

"स्तोभानात प्रदिश्यन्ते नागीतित्वेन वर्णवत्।
स्वरादिवत प्रदिश्यन्ते गीतिकालोपयोगतः॥

वामदेव्यसाम्नः योनौ द्वयोरर्द्धयोर्मध्ये औकारद्वयेन होशब्देन हायि-शब्देन च निष्पन्नः स्तोभः एवमाम्नातः 'औऽ३ हा हायि' इति। सोऽयं स्तोभः नोत्तरयोः अतिदिश्यते, कुतः ? अगीतित्वात् 'यदयोन्यां तदुत्तरयोर्गायति'— इति गीतिमात्रमतिदिश्यते। तत्र प्रथमाया ऋचः वर्णाः यथा नातिदिश्यन्ते तथा स्तोभा अपि इति प्राप्ते, ब्रूमः—स्वरो वर्णविश्लेषो विराम इत्येते गीत्यु-पयोगित्वाद् यथातिदिश्यन्ते तथा स्तोभा अपि गीतिकालपरिच्छेदकत्वा-दतिदिश्यन्ते" इति॥

सामवेदिनां साम्नवानुष्ठानकर्त्तव्यतानिरूपणम्

अष्टमाधिकरणद्वितीयवर्णके क्वचिदुत्पन्ना गानाभावशङ्का निवारिता—

"गानस्य नियमो नोत विद्यते वह्न्युपस्थितौ ।
नाम्नानद्वयतोऽस्त्येव प्रकृतत्वाछ्रुतेरपि ।।

क्वचित् कर्मविशेषे श्रूयते—'अयं सहस्रमानव इत्येतया ह्वनीयमुपनिष्ठते'—इति असावृग् संहिता ग्रन्थे (पू० आ० ५।८।८) समाम्नाता, प्रगीता गानग्रन्थे ( गेय गान १२।१।२९ )। ततो वह्न्युपस्थाने तस्यामृचि गानं न नियतं किन्तु विकल्पितम्-इति प्राप्ते, ब्रूमः—अस्त्येव नियमो गाने, कुतः ? सामवेदे गानस्यैव प्रकृतत्वात्, ऋचां संहितापाठोऽत्र गानायैव, नह्याधारमन्तरेण गातुं शक्यते। अथोच्येत 'अयं सहस्रेत्यृकप्रतीकपूर्वकेण वाक्येनोपस्थानविधानाद् वाक्यस्य प्रकरणात् प्रबलत्वादृचैवोपस्थानम् इति, तन्न प्रकृतप्रगीतमन्त्रवाचिन्या एतयेति सर्वनामश्रुतेः प्रबलतरत्वात्। तस्मात् प्रगीतयोरुपस्थानम्"—इति

बृहत्पृष्ठादिषु धर्मसाङ्कर्यचिन्तनम् ।

पञ्चदशाधिकरणादिषु त्रिषु धर्मसाङ्कर्यं चिन्तितम् ।
पञ्चदशाधिकरणम्—

"बृहद्रथन्तरैर्धर्मैः सङ्कीर्णे वा व्यवस्थिते ।
पृष्ठैक्यात् सङ्करो धर्मे निर्देशादेर्व्यवस्थितिः ।।

ज्योतिष्टोमे विकल्पनं पृष्ठस्तोत्रे विहितम् 'बृहत् पृष्ठं भवति, रथन्तरं पृष्ठं भवति' इति। तत्रोभयत्र धर्माः श्रुताः—'बृहति प्रस्तूयमाने मनसा समुद्रं ध्यायेत्, रथन्तरे प्रस्तूयमाने सम्मीलयेत्' इत्यादयः (ताण्ड्य ७।७) ते उभयत्र सङ्कीर्येरन्, पृष्ठसिद्धिलक्षणस्य कार्यस्यैकत्वात्—इति चेत्? न, निर्देशभेदात्, साङ्कर्ये त्ववैलक्षण्येन बृहदिति रथन्तरमिति च द्वौ निर्द्देशौ नोपपद्येयाताम्; किञ्चोभयधर्मसाहित्यं विरुद्धम्। उच्चैर्गेयं बलवद् गेयमिति बृहद्धर्मः। नोच्चैर्गेयं न बलवद् गेयमिति रथन्तरधर्मः। तस्मादुभयोर्धर्मा व्यवतिष्ठते" इति ।।

बृहद्रथन्तरयोर्धर्मसमुच्चयकथनम् ।

षोडशाधिकरणम्:—

"तयोर्धर्माः समुच्चेया न वा कण्वरथन्तरे।
द्विस्थानत्वाद् भाष्य आद्यो विरोधाद् वार्त्तिकेऽन्तिमः ।।

वैश्यस्तोमे 'कण्वरथन्तरं पृष्ठं भवति' इति श्रूयते। तत्र कण्वरथन्तराख्यसाम्नः पृष्ठस्तोत्रसाधनयोः प्राकृतयोः बृहद्रथन्तरयोरुभयाः स्थाने पतित्वादुभयसम्बन्धिधर्माः समुच्चेतव्याः। ये तु विरुद्धाः धर्माः उच्चैर्गेयं नोच्चैर्गेयमित्यादयः ते विकल्पन्ताम्, समुद्रध्याननिमीलनादीनां विरोधाभावात् प्रकृताविव निर्देशभेदस्यात्राभावाच्च समुच्चयः इति भाष्यकारस्य

मतम् । विकल्पितयोरेव द्वयोः स्थाने पतितत्वाद् विरुद्धधर्मस्वारस्याच्च विकल्प एव युक्तो, न तु समुच्चयः इति वार्त्तिककारस्य मतम् । तत्रोभयत्र तत्तन्मतविपरीतः पूर्वपक्षः उन्नेयः" ॥

**पृष्ठशब्दस्य वैदिकनामधेयत्वकथनम्**

सप्तदशाधिकरणम्—

"द्विसामके द्वयोधर्मं साङ्कर्यं का व्यवस्थितिः ।
पृष्ठैक्यात् सङ्करो मैवं धर्माणां सामगत्वतः ॥

'गोसव उभे कुर्यात्' इत्यादिना गोसवादौ बृहद्रथन्तरसामद्वयसाध्यं पृष्ठस्तोत्रं विहितम् । तत्र पृष्ठस्तोत्रस्यैकत्वेन धर्मव्यवस्थायाः असम्भवात् बृहत्युभयधर्माः कर्त्तव्याः, रथन्तरेऽप्युभयधर्माः, इत्येवं साङ्कर्यमिति चेत् ? मैवम् । नह्येते पृष्ठस्तोत्रप्रयुक्ताः धर्माः किन्तु सामप्रयुक्ताः । ततः 'साम्नो भेदात् धर्मा व्यवतिष्ठन्ते' इति व्यवस्थितधर्मोपेताभ्यां बृहद्रथन्तरनामकाभ्यां सामभ्यां निष्पन्नस्तोत्रस्य पृष्ठमिति वैदिकं नामधेयम्, यथा त्रिवृच्छब्दस्यार्थो वेदप्रसिद्धो गृहीतः तद्वत्"

**'त्रिवृत्' इति शब्दविषयको विचारः ।**

स च त्रिवृच्छब्दः प्रथमाध्यायस्य तृतीयपादे पञ्चमाधिकरणस्यान्तिमे वर्णके विचारितः—

"लौकिको वाक्यगो वार्थस्त्रिवृदादेः समत्वतः ।
उभौ विध्यर्थवादैकवाक्यत्वादस्त्विहान्तिमः ॥

'त्रिवृद् बहिष्पवमानम्' ( ताण्ड्य ब्रा० २।१४ ) इति श्रुतौ त्रिवृच्छब्दस्य त्रैगुण्यं लोकसिद्धोऽर्थः वाक्यशेषादृक्त्रयात्मकेषु सूक्तेष्ववस्थितानां बहिष्पवमानात्मकस्तोत्रनिष्पादनक्षमाणाम् 'उपास्मै गायता नरः' ( उ० आ० १।१२।३ ) इत्यादीनामृचां नवकमर्थः । तत्र धर्मनिर्णये वेदस्य प्रबलत्वेऽपि पदपदार्थनिर्णये लोकवेदयोः समानबलवत्त्वात् उभावर्थौ विकल्पेन गृहीतव्यौ, इति चेत् ? मैवम्, लौकिकार्थस्वीकारपक्षे विधिवाक्ये त्रैगुण्यमर्थः, अर्थवादवाक्ये स्तोत्रियाणामृचां नवकम्, इत्येवं विध्यर्थवादयोर्वैयधिकरण्यादेकवाक्यत्वं न स्यात् । अतः एकवाक्यत्वाय स्तोत्रियाणां नवकमेव विधिवाक्ये नियतोऽर्थः" ॥

**चित्राशब्दस्य नामधेयत्वनिर्णयः ।**

पृष्ठशब्दस्य नामधेयत्वं प्रथमाध्याये चतुर्थपादस्य तृतीयाधिकरणे चित्राशब्दवन्निर्णीतम्—

"यच्चित्रया यजेतेति तद्गुणो नाम वा भवेत् ।
चित्रस्त्रीत्वगुणौ रूढेरग्नीषोमीयके पशौ ॥
द्वयोर्विधौ वाक्यभेदो वैशिष्ट्ये गौरवं ततः ।
स्यान्नाम पृष्ठाज्यबहिष्पवमानेषु तत् तथा ॥

'चित्रया यजेत पशुकामः' इत्याम्नायते । तत्र चित्राशब्दो नोद्भिद्-शब्दवद् यौगिकः, किन्तु रूढ्या चित्रत्वं स्त्रीत्वं चाभिधत्ते । ततो न पूर्वन्यायेन

नामत्वं, तथा सति अग्नीषोमीयं पशुमालभेतेति विहितपशुयागमत्र यजेतेति-पदेनानूद्य तस्मिन् पशौ चित्रत्वस्त्रीत्वगुणौ विधीयेते इति प्राप्ते ब्रूमः–चित्रत्वं स्त्रीत्वं चेति द्वावेतौ गुणौ, तयोर्विधाने वाक्यं भिद्येत। तथा चोक्तम्––

प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः।
अप्राप्ते तु विधीयेरन् बहवोऽप्येकयत्नतः' ॥ इति

अथ वाक्यभेदपरिहाराय गुणद्वयविशिष्टं पशुद्रव्यरूपं कारकं विधीयेत, तदा गौरवं स्यात्। तस्माच्चित्राशब्दः पूर्ववत् यजिसामानाधिकरण्येन यागनामधेयं भवति, चित्रत्वं च तस्य विलक्षणद्रव्यद्वारेणोपपद्यते। 'दधि मधु घृतमापो धानास्तण्डुलास्तत्संसृष्टं प्राजापत्यम्'–इति 'दध्यादीनि विचित्राणि प्रदेयद्रव्याणि षडाम्नातानि' ( ताण्ड्य २६ ) तदेतच्चित्रानामकस्य यागस्योत्पत्तिवाक्यम्। यागस्वरूपभूतयोः दध्यादिद्रव्यप्रजापतिदेवतयोः अत्रोपदिश्यमानत्वात्। उत्पन्नस्य तस्य यागस्य 'चित्रया यजेत पशुकामः'–इत्येतत् फलवाक्यम्। एवं सति प्रकृतार्थो लभ्येत, अग्नीषोमीयपश्वनुवादेन गुणविधाने प्रकृतिहानाप्रकृतप्रक्रिये प्रसज्येयाताम्, लिङ्प्रत्ययस्य चानुवादकत्वाङ्गीकारान्मुख्यो विध्यर्थो बाध्येत तस्माच्चित्रापदं नामधेयम्" ॥

**बहिष्पवमानशब्दादीनां नामधेयत्वनिर्णयः।** यथा चित्राशब्दे नामधेयत्व तथा बहिष्पवमानशब्दे आज्यशब्दे पृष्ठशब्दे च तत्कर्मनामधेयत्वं योजनीयम्। एवं हि श्रूयते (ताण्ड्य२०)–'त्रिवृद् बहिष्ववमानम्, पञ्चदशान्याज्यानि, सप्तदशानि पृष्ठानि; इति। अस्य वाक्यत्रयस्यार्थो विविच्यते–सामगानामुत्तरा ग्रन्थे तृचात्मकानि सूक्तान्याम्नातानि। तत्र 'उपास्मै गायता नरः'–इत्याद्यं सूक्तम्। 'दविद्युतत्या रुचा'–इति द्वितीयम्। 'पवमानस्य ते कवे' तृतीयम्। ज्योतिष्ठोमस्य, प्रातःसवनानुष्ठाने तेषु त्रिषु सूक्तेषु गायत्रं साम गातव्यम्। तदिदं सूक्तत्रयगानसाध्यं स्तोत्रं बहिष्पवमानमित्युच्यते। तत्रावस्थितानामृचां पवमानार्थत्वाद्बहिःसम्बन्धाच्च।

**त्रिवृदादिस्तोमानां स्वरूपनिरूपणम्** न खल्विदं स्तोत्रम् इतरस्तोत्रवत् सदोनामकस्य मण्डपस्य मध्ये औदुम्बर्याः स्तम्बशाखायाः सन्निधौ प्रयुज्यते, किन्तु सदसो बहिः प्रसर्पद्भिः प्रयुज्यते। तस्य च बहिष्पवमानस्य त्रिवृन्नामकः स्तोमो भवति, तस्य च स्तोमस्य विधायकं ब्राह्मणवाक्यमेवमाम्नायते ( ताण्ड्य २। १–३ )–'तिसृभ्यो हिं करोति स प्रथमया, तिसृभ्यो हिं करोति स मध्यमया, तिसृभ्यो हिं करोति स उत्तमयोद्यतो त्रिवृतो विष्टुतिरिति'।

अयमर्थः–सूक्तत्रयपठितानां नवानामृचां गानं त्रिभिः पर्यायैः कर्त्तव्यम्।

तत्र प्रथमपर्य्याये त्रिषु सूक्तेषु आद्यास्तिस्र ऋचः द्वितीये पर्य्याये मध्यमाः, तृतीये पर्याये चोत्तमाः । तिसृभ्य इति तृतीयार्थे पञ्चमी, हिं करोति गायतीत्यर्थः । सेयं यथोक्तप्रकारोपेता गीतिस्त्रिवृत्स्तोमस्य त्रिष्टुतिः स्तुतिप्रकारविशेषः । अस्याः विष्टुतेरुद्यती नामेति । एवं परिवर्त्तिनी कुलायिनीति द्वे विष्टुती । तयोः परिवर्तिन्येवमाम्नायतु (ताण्ड्य २।१)–'तिसृभ्यो हिं करोति स पराचीभिः, तिसृभ्यो हिं करोति स पराचीभिः, तिसृभ्यो हिं करोति स पराचीभिः, परिवर्त्तिनी त्रिवृतो विष्टुतिः'–इति । पराचीभिः अनुक्रमेणाम्नाताभिरित्यर्थः । कुलायिन्येवमाम्नायते–'तिसृभ्यो हिं करोति स पराचीभिः, तिसृभ्यो हिं करोति या मध्यमा सा प्रथमा, या उत्तमा सा मध्यमा, या प्रथमा सोत्तमाः; तिसृभ्यो हिं करोति योत्तमा सा प्रथमा, या प्रथमा सा मध्यमा, या मध्यमा सोत्तमा, कुलायिनी त्रिवृतो विष्टुतिः'–इति । अत्र प्रथमसूक्ते पाठक्रम एव, द्वितीये मध्यमोत्तमप्रथमाः, तृतीये तूत्तमप्रथममध्यमाः इत्येवं व्यत्ययेन मन्त्राः गातव्याः । तदिदं विष्टुतित्रयं विकल्पितम् । त्रिवृच्छब्दस्येदृशं स्तोमस्वरूपमर्थः, न तु त्रैगुण्यमिति पूर्वपादे निर्णीतम् ॥

उत्तराग्रन्थे बहिष्पवमानसूक्तेभ्यः त्रिभ्यः ऊर्द्ध्वं चत्वारि सूक्तान्याम्नातानि–'अग्न आयाहि वीतये' ( उ० आ० १ । ४ ) इत्याद्यं सूक्तम् । 'आ नो मित्रावरुणा' ( उ० आ० १।५ ) इति द्वितीयम् । 'आयाहि सुषुमाहित' ( उ० आ० १ । ६ ) इति तृतीयम् । 'इन्द्राग्नी आगतं सुतम्' ( उ० आ० १ । ७ ) इति चतुर्थम् । तान्येनानि प्रातःसवने गायत्रसाम्ना गीयमानानि चत्वार्य्याज्यस्तोत्राणीत्युच्यन्ते । तन्निर्वचमं श्रूयते–'यदाजिमीयुस्तदाज्यानामाज्यत्वम्'–इति ( ताण्ड्य ७ । २ ) तेष्वाज्यस्तोत्रेषु पञ्चदशनामकः स्तोमो भवति । तस्य स्तोमस्य विष्टुतिरेवमाम्नायते–'पञ्चभ्यो हिं करोति स तिसृभिः स एकया स एकया, पञ्चभ्यो हिं करोति स एकया स तिसृभिः स एकया, पञ्चभ्यो हिं करोति स एकया स एकया स तिसृभिः'–इति ( ताण्ड्य ४।१ ) । एकं सूक्तं त्रिरावर्त्तनीयं, तत्र प्रथमावृत्तौ प्रथमाया ऋचस्त्रिरभ्यासः । द्वितीयावृत्तौ मध्यमायाः । तृतीयावृत्तावुत्तमायाः । सोऽयं पञ्चदशस्तोमः । उक्तेभ्यश्चतुर्भ्यः सूक्तेभ्यः उद्‌र्ध्वमुत्तराग्रन्थे त्रीणि माध्यन्दिनपवमानसूक्तान्याम्नाय तत उद्‌र्ध्वं चत्वारि सूक्तान्याम्नातानि, तेषु 'अभित्वा शूर नोनुमः' ( उ० आ० १।११ ) इत्याद्यम् । 'कया नश्चित्र आ भुवत्' ( उ० आ० १।१२ ) इति द्वितीयम् । 'तं वो दस्ममृतीषहम्' ( उ० आ १ । १३ ) इति तृतीयम् । 'तरोभिर्वो विदद्वसुम्' ( उ० आ० १ । १४ ) इति चतुर्थम् । एतानि क्रमेण 'रथन्तर'–( ऊह० १ प्र० १ सा ) 'वामदेव्य' ( ऊह० १ प्र ५ सा ) 'नौधस' ( ऊह० १ प्र ६ सा ) 'कालेय' ( ऊह० १ प्र ७ सा ) सामभिर्माध्यन्दिनसवने गीयमानानि पृष्ठस्तोत्राणीत्युच्यते । स्पर्शनात् स्पृष्टानीत्येवं निरुक्ति-

द्रष्टव्या । तेषु स्तोत्रेषु सप्तदशस्तोमो भवति, तस्य स्तोमस्य विष्टुति-रेवमाम्नायते––'पञ्चभ्यो हिं करोति स तिसृभिः स एकया स एकया, पञ्चभ्यो हिं करोति स एकया स तिसृभिः स एकया, पञ्चभ्यो हिं करोति स एकया स तिसृभिः स तिसृभिः'–इति। अत्र प्रथमावृत्तौ प्रथमायाः ऋचः त्रिरभ्यासः। द्वितीयावृत्तौ मध्यमायाः तृतीयावृत्तौ मध्यमोत्तमयोः। सोऽयं सप्तदश स्तोमः। अत्र त्रिष्वपि वाक्येषु त्रिवृत्पञ्चदशसप्तदशशब्दाः गुणविधायकत्वेन सम्मताः, यदि बहिष्पवमानाज्यपृष्ठशब्दा अपि गुणविधायकाः स्युः, तदा प्रत्युदाहरणम्। गुणद्वयविधानाद् वाक्यभेदः स्यात्। तस्माद् बहिष्पवमानादिशब्दाः स्तोत्रनामधेयानि, तैर्नामभिः कर्माण्यनूद्य त्रिवृदादिगुणाः विधीयन्ते'–इति ॥

**पृष्ठादिस्तोत्राणां प्रधान-कर्मत्वनिर्णयः** उक्तस्य पृष्ठादिस्तोत्रस्य प्रधानकर्मत्वं द्वितीयाध्यायस्य प्रथमपादे पञ्चमाधिकरणे निर्णीतम्––

"प्रउगं शंसतीत्यादौ गुणतोत प्रधानता ।
दृष्टादेव स्मृतिस्तेन गुणता स्तोत्रशस्त्रयोः ॥
स्मृत्यर्थत्वे स्तौतिशंस्योर्धात्वोः श्रौतार्थबाधनम् ।
तेनादृष्टमुपेत्यापि प्राधान्यं श्रुतये मतम् ॥

ज्योतिष्टोमे श्रूयते–'प्रउगं शंसति', 'निष्केवल्यं शंसति', 'आज्यैः स्तुवते', 'पृष्ठैः स्तुवते'––इति । प्रउगनिष्केवल्यशब्दौ शस्त्र-विशेषनामनी, आज्यपृष्ठशब्दौ तु व्याख्यातौ । अप्रगीतमन्त्रसाध्या स्तुतिः शस्त्रं, प्रगीतमन्त्रसाध्या स्तुतिः स्तोत्रम् । तयोः स्तुत-शस्त्रयोर्गुणकर्मत्वं युक्तं कुतः ? तुषविमोकवद् दृष्टार्थलाभात् । पठ्यमानेषु मन्त्रेषु अनुस्मरणेन देवता संस्क्रियते इति प्राप्ते, ब्रूमः–– तेषु अनुस्मरणेन स्तोतव्यायाः देवतायाः स्तावकैर्गुणैः संबन्धकीर्तनं स्तौतिशंसतिधात्वोर्वाच्योऽर्थः । यदि मन्त्रवाक्यानि गुणसम्बन्धाभिधान-पराणि, तदा धात्वोः मुख्यार्थलाभात् श्रुतिरनुगृहीता भविष्यति। यदा तु गुणद्वारेणानुस्मरणीयदेवतास्वरूपप्रकाशनपराणि मन्त्रवाक्यानि स्युः, तदा धात्वोः मुख्यार्थो न स्यात् । लोके हि देवदत्तश्चतुर्वेदाभिज्ञः' इत्युक्ते स्तुतिः प्रतीयते, तस्य वाक्यस्य गुणद्वारेण देवदत्तस्वरूपोपलक्षणपरत्वेन गुण-सम्बन्धपरत्वात्; यदा तु देवदत्तस्वरूपपरता 'यश्चतुर्वेदी तमानय' इत्यादौ, तत्र न स्तुतिप्रतीतिः, तस्य चतुर्वेदसम्बन्धद्वारेण देवदत्तस्वरूपपरत्वेन गुणसम्बन्धपरत्वाभावात् । ततश्चाज्यैर्देवं प्रकाशयेत्, पृष्ठैर्देवं प्रकाशयेत् इत्येवं विध्यर्थपर्य्यवसानाद् धात्वोर्मुख्यार्थो बाध्येत । ततो धातुश्रुतिम-बाधितुं स्तोत्रशस्त्रयोः प्रधानकर्मत्वमभ्युपेतव्यम् । तत्र दृष्टं प्रयोजनं नास्तीति चेत् ? ततोऽपूर्वमस्तु इति ॥

**रेवतीषु ऋक्षु वारवन्तीयसामगानप्रकारबोधनम्**

तत्रैव द्वितीयपादे द्वादशाधिकरणे सामविशेषप्रयुक्तं कर्मान्तरत्वमभिहितम्—

"उक्त्वाग्निष्टुतमेतस्य वारवन्तीयसाम हि।
रेवतीष्वृक्षु कृत्वेति श्रुतं पशुफलाप्तये॥
रेवत्यादिर्गुणः कर्म पृथग्वा पूर्ववद् गुणः।
रेवतीवारवन्तीयसम्बन्धाख्यः पशुप्रदः॥
साम्नोऽत्र फलकर्मभ्यां सम्बन्धे वाक्यभिन्नता।
तेनोक्तगुणसंयुक्तमन्यत् कर्मोच्यते फले॥

'त्रिवृदग्निष्टोमस्तस्य वायव्यासु ऋक्षु एकविंशाग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो यजेत" (ताण्ड्य १६।७) इत्यस्य सन्निधौ श्रूयते (ताण्ड्य १७।८)—'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत'—इति। अस्यायमर्थः—अग्निष्टोमस्य विकृतिरूपः कश्चिदेकाहोऽग्निष्टुन्नामकः, स च पृष्ठस्तोत्रे त्रिवृत्स्तोमयुक्ततया त्रिवृदित्युच्यते। अग्निष्टोमावथादीनां सप्तानां सोमसंस्थानां मध्य अग्निष्टोमसंस्थारूपत्वादग्निष्टोम इत्यप्युच्यते। प्रकृतौ तृतीयसवने आर्भवपवमानस्योपरि 'यज्ञायज्ञीयं' साम गीयते, तेन च साम्ना अग्निष्टोमयागस्य समाप्यमानत्वादग्निष्टोमसामेत्युच्यते। तच्च प्रकृतौ 'यज्ञायज्ञा वो अग्नये' इत्याद्याग्नेयीष्वृक्षु (उ० आ० १।२०।१–३) गीयते; अस्मिंस्त्वग्निष्टुति ब्रह्मवर्चसकामेन वायव्यास्वृक्षु तत् साम गातव्यम्, तच्च प्रकृताविवैकविंशस्तोमयुक्तम्; पशुकामस्य तु 'रेवतीर्नः सधमाद'—इत्यादिषु रेवतीष्वृक्षु (उ० आ० ४।१४) 'वारवन्तीय' साम गायेदिति। तत्र रेवतीनामृचां वारवन्तीयनामकेन साम्ना यः सम्बन्धः सोऽयं पशुफलायाग्निष्टुति विधीयते। एतस्यैवेति प्रकृतपरामर्शकेनैतच्छब्देनान्यव्यावर्त्तकेनैवकारेण चाग्निष्टुतः समर्प्यमाणत्वात्; यथा पूर्वाधिकरणे इन्द्रियफलाय प्रकृतेऽग्निहोत्रे दधिगुणो विहितः तद्वत्, इति प्राप्ते, ब्रूमः—विषमो दृष्टान्तः, दध्नो होमजनकत्वं न शास्त्रेण बोधनीयं, तस्य लोकतोऽवगन्तुं शक्यत्वात्। फलसम्बन्ध एक एव शास्त्रबोध्यः इति न तत्र वाक्यभेदः, इह तु रेवत्यृगाधारकवारवन्तीयसाम्नोऽग्निष्टुत्कर्मसाधनत्वं फलसाधनत्वं चेत्युभयस्य शास्त्रैकबोध्यत्वाद् दुर्वारो वाक्यभेदः। तेन पशुफलकं यथोक्तगुणविशिष्टकर्मान्तरमत्र विधीयते। एतच्छब्दः एवकारश्च विधीयमानकर्मान्तरविषयतया योजनीयौ" इति।

**निधनविशेषाणां काम्यत्वकथनम्**

उत्तरस्मिंस्त्वधिकरणे निधनविशेषाः काम्याः विचारिताः—

"वृष्टचन्नस्वर्गकामानां सौरभं स्तोत्रमीरितम् ।
निधनाद्यपि हीषुर्ग इति वृष्टचादिकामिनाम् ।।
फलान्तरं हि वृष्टचादि हीषादीनामुतोदिते ।
सौभरे फलसंभिन्ने निधनं विनियम्यते ।।
फलान्तरं चतुर्थ्योक्तं वृष्टिकामाय हीषिति ।
सौभरस्य फलं वृष्टिर्हीषित्युक्त्या विवर्द्धते ।।
नोक्तं वृष्टचन्नकामानामन्यत्वं प्रत्यभिज्ञया ।
नियमेऽपि चतुर्थ्येषा तादर्थ्यादुपपद्यते ।।

'यो वृष्टिकामो यो ऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीत, सर्वे वै कामाः सौभरम्' इति [ ताण्डच ८।८ ] समाम्नाय पुनः समाम्नातं-'हीषिति वृष्टिकामा निधनं कुर्यात्, उर्गित्यन्नाद्यकामाय, ऊ इति स्वर्गकामाय' इति । 'सौभरं' नाम सामविशेषम् (ऊह १।१६) । निधनं नाम पञ्चभिः सप्तभिर्वा भागैरुपेतस्य साम्नोऽन्तिमो भागः । तस्मिन्निधने हीषादयो विशेषाः सौभर-साम साध्यास्तोत्रफलेभ्यो वृष्टचादिभ्योऽन्यानि वृष्टचादिफलानि जनयितुं विधीयन्ते, कुतः ? हीषादिविधिवाक्ये वृष्टिकामयेत्यादिना चतुर्थीश्रवणात्; सा च तादर्थ्यं त्रयाणां हीषादीनां वृष्टचादिकामपुरुषशेषत्वं गमयति. तच्छेष-त्वं च पुरुषाभिलषितफलसाधनत्वे सत्युपपद्यते । ततः सौभरस्य हीषीति निधनविशेषस्य च फलभूते द्वे वृष्टी भवतः, तदुभयमेलनान्महती वृष्टिः, इति प्राप्ते ब्रूमः—सौभरविधौ यो वृष्टचादिकामः स एव हीषादिविधौ प्रत्यभि-ज्ञायते । ततः सौभरस्य फलभूता ये वृष्टचादयः त एव हीषादि-शास्त्रेष्वनूद्यन्ते इति न फलान्तरम् । अथोच्येत नूतनफलान्तराभावात् हीषादीनां च नानाशाखाध्ययनादेव सौभरे प्राप्तत्वादनर्थकोऽयं विधिः इति तन्न, फलत्रयकामानां त्रयाणमनियमेनैव हीषादिषु मध्ये यस्य कस्यचि-न्निधनस्य प्राप्तौ विधेर्नियमार्थत्वात्, तादर्थ्यन्तु फलान्तराभावेऽपि सौभर-वाक्योक्तवृष्टचादिफलसाधने सौभरे हीषादीनां नियम्यमानत्वादुपपद्यते । तस्मादयं निधनविशेषनियमः न विधिः' इति ।

**सामगाने उच्चैस्त्वनीचै-स्त्वधर्मविचारः** तृतीयाध्यायस्य तृतीयपादे प्रथमद्वितीयाधिकरणयोः सामगाने उच्चत्वधर्मौ विचारितौ ।

तत्र प्रथमाधिकरणम्—

"कर्तव्यमुच्चैः सामर्ग्भ्यामुपांशु यजुषेत्यमी ।
मन्त्राणां वाथ वेदानां धर्मा मन्त्रगता यतः ।।
विध्युद्देशे मन्त्रवाचि शब्दाः प्रोक्ताः ऋगादयः ।
ऋग्वेदोऽग्नेः समुत्पन्न इत्युपक्रमवेदगीः ।।
असंजातविरोधोऽतस्तद्वशातुपसंहृतेः ।
नयने सति वाक्येन धर्माणां वेदगामिता ।।

ज्योतिष्टोमे श्रूयते—'उच्चैर्ऋचा क्रियते, उपांशु यजुषा, उच्चैः साम्ना' इति। तत्र विधिवाक्ये मन्त्रवाचिनामृगादिशब्दानां प्रयोगान्मन्त्रधर्माः उच्चैस्त्वादयः। तथा सति यजुर्वेदोत्पन्नाः अध्वर्युणा प्रयुज्यमानाः अप्यृचः उच्चैरेव पठितव्याः, इति चेत्? मैवम्, असंजातविरोधित्वेन प्रबलमुपक्रममनुसृत्य तद्वशेनोपसंहारस्य नेतव्यत्वात्। उपक्रमे हि वेदशब्दः श्रुतः—'त्रयो वेदा असृज्यन्त, अग्नेर्ऋग्वेदः, वायोर्यजुर्वेदः, आदित्यात् सामवेदः' (छा० उ० ४।१६) इति। अतः उपक्रमगतवेदानुसारेण विध्युद्देशगतानामप्यृगादिशब्दानां वेदपरत्वे सत्यृचोऽपि यजुर्वेदोत्पन्नाः उपांशु पठनीयाः। ननूपक्रमोऽर्थवादत्वाद् दुर्बलः, उपसंहारो विध्युद्देशत्वात् प्रबलः, इति चेत्? बाढम्। लब्धात्मनो हि विध्युद्देशस्य प्राबल्यम्, इह तु प्रथमतो बुद्ध्युत्पादकः उपक्रमः। तदानीमलब्धात्मकत्वान्न तस्य बाधकत्वं, पश्चात् तु वाक्यैकत्वाय तद्विरोधे नैवात्मानं लप्स्यते। तदेवमुपक्रमोपसंहारैकवाक्यताबलेन निर्णयात् वाक्यविनियोगोऽयम्" इति॥

आधाने वामदेव्यादीनामुपांशु गेयत्वनिर्णयः। द्वितीयाधिकरणम्—

"यजुर्वेदस्थमाधानं तदङ्गं साम तत्र किम्।
उच्चैरुपांशु वा गानमुच्चैः शीघ्रप्रतीतितः॥
उत्पत्तेर्विनियोगोऽत्र, प्रबलोऽनुसृतिर्यतः।
मुख्यस्याङ्गेन कर्तव्या, तस्माद् गान उपांशुता॥
आधानस्यात्र मुख्यत्वं, गानस्य गुणताऽथवा।
विनियोगस्य मुख्यत्वमुत्पत्तेर्गुणताऽस्त्विह॥

आधाने वामदेव्यादिसामान्यङ्गत्वेन विहितानि। तत्र यद्यप्येतानि यजुर्वेदगतस्याधानस्याङ्गानि तथापि सामवेदे तेषामुत्पन्नत्वादुत्पत्तेश्च शीघ्रबुद्धिहेतुत्वात् सामवेदधर्मेण गेयानीति चेत्? न, विनियोगस्य प्रबलत्वात्। स च यजुर्वेदे श्रुतः—'य एवं विद्वान् वामदेव्यं गायति' इति। गुणेन हि मुख्यस्यानुसरणं न्याय्यम्। को गुणः, किं मुख्यम् इति चेत्? अत्राङ्गित्वादाधानं मुख्यम्। सामगानमङ्गत्वेन गुणः तथा सति 'धर्मः शिरः' इत्यादयः आधानाङ्गभूताः मन्त्राः यथोपांशु पठ्यन्ते, तथा सामान्यप्याधानानुसारेणोपांशु गेयानि; अथवा विनियोगोऽनुष्ठापकविधित्वान्मुख्यः, उत्पत्तिविधिरतथाविधत्वाद् गुणः। तस्मादत्र विनियोगवेदानुसारेणोपांशु गेयानि" इति॥

एकविंशादिस्तोमविचारः। पञ्चमाध्यायस्य तृतीयपादे चतुर्थपञ्चमाधिकरणयोः स्तोमविचारः। तत्र चतुर्थाधिकरणम्—

"स्तोमवृद्धौ किमागन्तोर्मध्येऽन्ते वाऽस्तु मध्यतः।
द्वादशाहवदन्यत्र मध्यानुक्तेर्न मध्यतः॥

इदमाम्नायते—'एकविंशेनातिरात्रेण प्रजाकामं याजयेत्, त्रिणवेनौज-

स्कामं, त्रयस्त्रिंशेन प्रतिष्ठाकामम्' इति। तत्र प्रकृतौ बहिष्पवमानस्तोत्रे त्रयस्तृचा भवन्ति–'उपास्मै गायत' (उ०आ०१प्र०१ सू० १–३ ऋ०) इत्यादिः एकः। 'दविद्युतत्या रुचा' ( उ० आ० १ प्र० २ सू० १–३ ऋ० ) इत्यादिः द्वितीयः। 'पवमानस्य ते कवे' ( उ० १ प्र० ३ सू० १–३ ऋ० ) इत्यादि, तृतीयः। तेषु त्रिषु तृचेषूद्ध्वं गानेन त्रिवृत्स्तोमो भवति (ताण्डच २। १–३ )। न त्वत्र पञ्चदशसप्तदशस्तोमादीनामिवावृत्तगानमस्ति। स च बहिष्पवमानो विकृतावतिरात्रे चोदकेन प्राप्तः। विवृत्स्तोमं बाधितुमेकविंशादिस्तोमाः विहिताः। बहिष्पवमाने आवृत्तगानाभावात्। त्रिषु तृचेष्ववस्थिताभिर्नवभिर्ऋग्भिरेकविंशस्तोमपूरणाभावात्। तत्पूरणाय चत्वारस्तृचा आगमयितव्याः, त्रिणवस्तोमपूरणाय षट् तृचाः; त्रयस्त्रिंशस्तोमपूरणायाष्टौ तृचाः, ऋगागमनं चोपरिष्टात् वक्ष्यते। तेषां चागन्तूनां मन्त्राणां प्राकृतबहिष्पवमानमध्ये निवेशः कार्यः द्वादशाहे तद्दर्शनात्, इति प्राप्ते ब्रूमः–द्वादशाहे हि वचनमेवाम्नायते–'स्तोत्रियानुरूपौ तृचौ भवतः, वृषण्वन्तस्तृचा भवन्ति, तत्र उत्तमः पर्यासः' ( ताण्डच ११।६ ) इति। अयमर्थः–प्राकृतानां बहिष्पवमानगतानां त्रयाणां तृचानां स्तोत्रियोऽनुरूपः पर्यासश्चेति त्रीणि नामानि तत्र चोदकागतयोरनुरूपपर्यासयोस्तृचयोर्मध्ये वृषण्वच्छब्दयुक्तास्तृचाः कर्तव्या इति। न चैवमतिरात्रे मध्ये निवेशनाय वचनमस्ति। तस्मात् क्लृप्तक्रममबाधितुमागन्तूनामन्ते निवेशः" इति ॥

[1]आवापोद्वाप-विचारः

पञ्चमाधिकरणम्—

"आर्भवे साम्न आगन्तोरन्ते मध्येऽथवाऽग्रिमः।
पूर्ववत् त्रीणि यज्ञस्येत्युक्त्वा मध्ये निवेशनम् ॥

पूर्वोदाहृतेऽतिरात्रे माध्यन्दिनार्भवपवमानयोश्चोदकप्राप्तौ पञ्चदशसप्तदशस्तोमो बाधितुमेकविंशादिविवृद्धस्तोमो वचनादनुष्ठीयते। तत्र बहिष्पवमानवदृगागमनं न भवति, किन्तु सामागमेन स्तोमपूरणमिति दशमे वक्ष्यते। तस्य चागन्तोः साम्नः पूर्वोक्तानामृचामिवान्ते निवेशनात् पठितानां मध्ये तत्साम चरमे तृचे गातव्यम्, इति प्राप्ते;ब्रूमः–'त्रीणि ह वै यज्ञस्योदराणि गायत्री, बृहती, अनुष्टुप् च। अत्र ह्येवाऽऽवपन्त्यत एवोद्वपन्ति ( ताण्डच ७३ ) इति हि विशेष आम्नायते। अयमर्थः–स्तोमस्य विवृद्धये साम्न आवापः क्रियते, ह्रासाय चोद्वापः (१), तावुभावावापोद्वापौ गायत्र्यादिष्वेव नान्यत्रेति। 'उच्चा ते जातमन्धसः' ( उ० आ० १। ८। १–३ ) इत्येष माध्यन्दिनपवमानस्याद्यस्तृचः। 'स्वादिष्ठया' ( उ० आ० १। १४। १–३ ) इत्येषः आर्भवपवमानस्य। तावुभौ गायत्री-

१. आवापशब्दस्य आक्षेपोऽर्थः। उद्वापशब्दस्य चोत्क्षेपः।

च्छन्दस्कौ तयोरावापः, न तु त्रिष्टुब्जगतीच्छन्दस्कयोरन्ययोस्तृचयोः सामाऽऽवपनीयम्" इति ।।

तत्रैव पञ्चदशाधिकरणे स्तोमविचारः—

अन्यशब्दस्य सर्वविषयत्वकथनम्

"एकस्तोमेऽन्यशब्दः स्यात्, बहुस्तोमेऽपि वाऽग्रिमः ।
त्रिवृदन्येत्यर्थवादान्नान्यमात्रस्य सम्भवात् ।।

अत्र पूर्वोदाहृतोऽन्येनेत्ययमन्यशब्दः एकस्तोमके क्रतौ वर्तते, कुतः ? अर्थवादेन तदवगमात् । यो, वै त्रिवृदन्यं यज्ञक्रतुमापद्यते, स तं दीपयति, यः पञ्चदश स तं, यः सप्तदश स तं, य एकविंशः स तम्'–(ताण्ड्य १६।१) इत्यर्थवादः । अस्यायमर्थः–त्रिवृदादयश्चत्वारः स्तोमाः अग्निष्टोमे वर्त्तन्ते, तेषु त्रिवृत्स्तोमो विकृतिरूपं यं यज्ञमाप्नोति स त्रिवृत्स्तोमः तं यज्ञं दीपयति प्रकाशयति सर्वतो व्यप्नोतीति । स्तोमान्तरस्याप्रवेशाय त्रिवृत एव सर्वस्मिन् यज्ञस्वरूपे व्याप्तावयमेकस्तोमकः क्रतुर्भवति । एवं पञ्चदशादिस्तोमव्याप्तिर्योजनीया । तथा सत्यर्थवादादेकस्तोमकानामेव बुद्धिस्थत्वात् त एवान्यशब्देनोच्यन्ते । एकस्तोमकाश्च षड्रात्रादिष्वाम्नाताः—'त्रिवृदग्निष्टोमो भवति । पञ्चदश उक्थो भवति'इत्यादयः। तस्मात् तद्विषयोऽन्यशब्दः, इति प्राप्ते, ब्रूमः–'स तं दीपयति' इत्यत्र प्रकाशकत्वमात्रमुच्यते । तच्च व्याप्तिमन्तरेण सम्बन्धमात्रादप्युपपद्यते । तस्मात् अग्निष्टोमप्रतियोगितया बहुस्तोमैकस्तोमसाधारणत्वेन श्रूयमाणस्यान्यशब्दस्य सङ्कोचहेत्वभावात् सर्वविषयोऽयमन्यशब्दः" इति ।

सर्वपृष्ठातिदेशनिर्णयः

सप्तमाध्यायस्य तृतीयपादे तृतीयाधिकरणे सर्वपृष्ठातिदेशश्चिन्तितः—

"विश्वजित् सर्वपृष्ठः किमनुवादो रथन्तरम् ।
बृहता वा समुच्चेयं यद्वा षाडहिकानि षट् ।।
अतिदेश्यानि तत्राद्यो माहेन्द्रादिचतुष्टये ।
पृष्ठशब्दाच्चोदकेन सर्वेषामिह सम्भवात् ।।
समुच्चयो वा विषये सर्वत्वं बह्वपेक्षया ।
न तु द्वयोरतः षण्णां पृष्ठानामतिदेशनम् ।।

'विश्वजित् सर्वपृष्ठो भवति' ( ताण्ड्य ६।३ ) इति श्रूयते । सर्वपृष्ठशब्दोऽनुवादः, कुतः ? प्राप्तत्वात् । तथाहि-ज्योतिष्टोमे माध्यन्दिनपवमानानन्तरभावीनि माहेन्द्रादीनि चत्वारि स्तोत्राणि सन्ति–'अभि त्वा शूर नोनुमः' (उ० आ० १।११), 'कया नश्चित्र आभुवत्' (उ०आ१।१२)'तं वो दस्ममृतीषहम्'(उ०आ०१।१३),तरोभिर्वो विदद्वसुम् (उ०आ०१।१४) इत्येतेषु चतुर्षु सूक्तेषु तानि स्तोत्राणि सप्तदशस्तोमतामापाद्य

गीयन्ते । एकस्मिन् सूक्ते विद्यमानानां तिसृणामृचां ब्राह्मणोक्तविधानेन सप्तदशधाऽभ्यासः सप्तदश स्तोमः। तादृशे स्तोत्रेषु पृष्ठशब्दः श्रूयते–'सप्तदशानि पृष्ठानि'–इति । तानि पृष्ठानि विश्वजिति चोदकप्राप्तत्वात् सर्वपृष्ठशब्देनानूद्यन्ते इत्येकः पक्षः । रथन्तरपृष्ठपृष्ठयोर्ज्योतिष्टोमे विकल्पितयोरिहापि चोदकेन विकल्पप्राप्तौ सर्वशब्देन समुच्चयो विधीयते । तथा सत्यनुवादकृतं वैयर्थ्यं न भविष्यति–इति द्वितीयः पक्षः । सर्वत्वं बहुषु मुख्यं न तु द्वयोः । तस्मादनेन सर्वपृष्ठशब्देन षट्–सङ्ख्यकानि पृष्ठान्यतिदिश्यन्ते । षडहे प्रतिदिनमेकैकं पृष्ठं विहितम् , तानि च षट्–पृष्ठानि रथन्तर–बृहद्–वैरूपं–वैराज–शाक्वर–सामभिः निष्पाद्यानि । यद्यपि विश्वाजित एकाहत्वाद् ज्योतिष्टोमविकृतित्वमेव न तु षडहविकृतित्वम् , तथापि सर्वपृष्ठोक्तिबलात् तानि षट् पृष्ठान्यतिदिश्यन्ते" इति ॥

**स्वरसामविकार-चिन्तनम्**

तत्रैव दशमाधिकरणे स्वरसामविकारचिन्ता––

"न विकारा विकारा वा स्वरसामादयो न हि ।
वैष्णवन्यायतो मैवमनन्यगतिलिङ्गतः ।

गवामयने द्वयोर्मासषट्कयोर्मध्ये वर्त्तमानं विषुवन्नामकं प्रधानभूतमेकमहर्विद्यते । तच्च दिवा कीर्त्यम् । तस्मात् प्राचीनास्त्रयः स्वरसामनामकाः अहर्विशेषाः । तथोपरिष्टादपि त्रयः स्वरसामानः तदेतदभिप्रेत्य श्रूयते 'अभितो दिवाकीर्त्यं त्रयः स्वरसामानः' ( ताण्ड्य ४।५ ) तेषु च ग्रहसातत्याय सप्तदशस्तोमादयो धर्माः विहिताः (ताण्ड्य ४।३) । अन्यत्र त्वेवं श्रूयते–'पृष्ठ्यः षडहो, द्वौ स्वरसामानौ'–इति । तावेतावहर्विशेषौपूर्वोक्तानां स्वरसाम्नां न विकारौ, कुतः । वैष्णवसमानत्वात् । यथा वैष्णवशब्दो देवतारूपगुणविधानेन मुख्यवृत्तित्वान्न लक्षणया धर्मानतिदिशति, तथा सामविशेषरूपगुणविधायकः स्वरसामशब्दः, इति प्राप्ते, ब्रूमः–अनन्यगतिलिङ्गवशात् स्वरसामानौ विकारौ भवतः । तथाहि–'षडहो, द्वौ स्वरसामानौ, इत्येवं योऽयमष्टाह उपन्यस्तः, तत्र षट्स्वहःसु क्रमेण 'त्रिवृत' 'पञ्चदशः' 'सप्तदशः' एकविंशः' 'त्रिणवः' 'त्रयस्त्रिंशः' इत्येवं स्तोमषट्कं चोदकेन प्राप्तम् । एवं स्थिते तृतीयषष्ठदिवसगतयोः सप्तदशत्रयस्त्रिंशयोर्व्यत्यासं विधाय सप्तमाष्टमयोरह्नोः सप्तदशस्तोमं सिद्धवत्कृत्य त्रिषु चरमेष्वहःसु सप्तदशस्तोमनैरन्तर्यमर्थवादेनानुवदति । 'यत् तृतीयं सप्तदशमहः तत् त्रयस्त्रिंशस्थानमभिपर्याहरन्ति' इति व्यत्यासविधिः । 'त्रयाणां सप्तदशानामनवानताया' इत्यर्थवादः । तत्र यद्यन्तयोरह्नोः सप्तदशस्तोमं स्वरसामशब्दोऽतिदिशेत् तदा नैरन्तर्यमुपपद्यते, न त्वन्यथा । तस्मान्न वैष्णवन्यायेन गुणविधि किन्तु धर्माणामतिदेशकः" इति ॥

श्लोकादिसाम्ना आज्यपृष्ठादिस्तोत्रस्य समुच्चयनिर्णयः

दशमाध्यायस्य चतुर्थपादे नवमाधिकरणम्—
"बाध्यं श्लोकादिनाऽऽज्यादि न वाऽऽद्यः स्तुतिलिङ्गतः ।
देशसाम्नोर्विधौ भेदे वैशिष्ट्यात्तु समुच्चयः ॥

महाव्रते श्रूयते—'श्लोकेन पुरस्तात् सदसः स्तुवते, अनुश्लोकेन पश्चात्' ( ताण्ड्य ५।४ ) इत्यादि तत्र श्लोकानुश्लोकादिनामकैः सामभिः प्राकृतान्याज्यपृष्ठादिस्तोत्रगतानि रथन्तरवामदेव्यादिनामकानि सामानि बाध्यानि । कुतः ? 'स्तुवते'—इति प्रकृतिलिङ्गदर्शनात् प्रकृतौ 'आज्यैः स्तुवते, पृष्ठैः स्तुवते'—इति श्रुतम् । नैतत् सारम् । किमत्र स्तुतिमनूद्य देशसामगुणौ विधीयेते ? किं वा गुणद्वयविशिष्टा स्तुतिः ? नाद्यः, वाक्यभेदापत्तेः । द्वितीये तु कार्यभेदेन बाध्याभावात् समुच्चयः स्यात्" इति ।

कौत्सादिसाम्नः प्राकृतबाधकत्वनिर्णयः

तत्रैव दशमे कौत्सादिसाम्नः प्राकृतसामबाधकत्वम् ।
"समुच्चीयेत कौत्सादि यदि वा प्राकृतबाधकम् ।
स्तुत्या भावादादिमोऽन्त्यो लिङ्गप्रकरणद्वयात् ॥

विकृतिविशेषे श्रूयते—'कौत्सं भवति' 'काण्वं भवति' ( ताण्ड्य १३।६ ) इति । तदेतत् कौत्सादिनामकं साम प्राकृतेन साम्ना समुच्चीयते । कुतः ? प्राकृतस्य स्तुतिलिङ्गस्याभावेन कार्यैक्याभावात् । मैवम्, प्रकरणात् क्रत्वङ्गत्वे सति ऋगक्षराभिव्यक्तिसामर्थ्यलक्षणप्राकृतलिङ्गेन कार्यैक्यावगमात् । तस्माद् बाधकम्" इति ॥

तत्रैव विशेषेव्यवस्था

एकादशे त्वेकायुक्तितः प्राकृतबाधकत्वम्—
"तत् सर्वबाधकं सर्वमेकद्व्याद्युक्तितोऽथवा ।
अविशेषादादिमोऽन्त्य एकाद्युक्तिविशेषतः ॥

तत् पूर्वोक्तं कौत्सादिसामविषयः तत्र, किं 'कौत्सं' साम प्राकृतसर्वसामनिवर्त्तकम्, काण्वमपि तथा । इत्येकैकस्य सर्वनिवर्त्तकत्वमुच्यते ? आहोस्विदेकवचनान्तनिर्दिष्टमेकस्य निवर्त्तकं, द्विवचनान्तनिर्दिष्टं द्वयोः बहुवचनान्तनिर्दिष्टानि बहूनाम् ? तत्र नियामकाभावादाद्यः पक्षः प्राप्नोति । एकादिवचनरूपाणां श्रुतीना नियामकत्वादन्त्यः पक्षोऽभ्युपेयः । तथाहि—'कौत्सं भवति', 'वसिष्ठस्य जनित्रे भवतः' ( ताण्ड्य १४।११ ), 'क्रौञ्चानि भवन्ति' ( ताण्ड्य १६।३ )—इति निवर्त्तकेषु श्रूयमाणानि एकद्विबहुवचनानि निवर्त्त्यानां तत्सङ्ख्यावत्वं प्रत्यासत्या बोधयन्ति, किञ्च एवं सति अबाधितसामविषयश्चोदकोऽनुगृहीतो भवति । कृत्स्नबाधे तु सर्वश्चोदको निरुध्यते । तस्मान्न सर्वबाधकः" इति ॥

स्तोमवृद्ध्यवृद्ध्योः प्राकृतबाधकत्व-निर्णयः

द्वादशो स्तोमवृद्ध्यवृद्ध्योः प्राकृतबाधिका—
"स्तोमस्थयोर्वृद्ध्यवृद्ध्योः प्राकृतः किं निवर्त्तते ।
अवृद्धावेव वाऽऽद्यः स्यात् सामोत्पत्त्युपयोगतः ॥
अवृद्धावुपयोगाय प्राकृतस्य निवर्त्तकम् ।
वृद्धौ पूर्वोपयोगित्वात् वृद्धौ तु न निवर्त्तकम् ॥

सन्ति वृद्धस्तोमकाः अवृद्धस्तोमकाश्च विकृतिरूपाः ऋतवः तत्रो-भयत्रापि यानि सामान्युपदिष्टानि तैरतिदिष्टानां साम्नां निवृत्तिः स्यात्, अन्यथा सामोत्पत्तिवैयर्थ्यात् इति पूर्वः पक्षः । सिद्धान्तः स्पष्टार्थः" इति ।

छन्दोविशेषत आवाप-कथनम्

त्रयोदशे स्तोत्रे छन्दोविशेषतः आवापः—
"क्वापि स्तोत्र ऋचि क्वापि स्यादावापस्तथोद्धृतिः ।
पवमानेषु गायत्र्यादिष्वेवोताविशेषतः ॥
आद्यो नौ परिसङ्ख्यानादत्र ह्येवेति तद्विधेः ।
विध्यन्तराशेषरूपमपूर्वं तद्विधीयते ॥

अवृद्धस्तोमकेषु प्राकृतस्यातिदिष्टस्य साम्न उद्वापः, प्रत्यक्षोप-दिष्टानामावापः । 'वृद्धस्तोमकेष्वावापः एव' इति स्थितं पूर्वाधिकरणे । तावेतावावापोद्वापौ यस्मिन् किस्मचित् स्तोत्रे यस्यां कस्याञ्चिदृचि स्याताम्, कुतः ? नियामकाभावात् इति पूर्वः पक्षः । नो खल्वेतद् युक्तम् । एवकारेण प्रकृतपवमानव्यतिरिक्तेष्वाज्यादिस्तोत्रेषु गायत्रीबृहत्यनुष्टुब्-व्यतिरिक्तास्वृक्षु आवापोद्वापयोः परिसङ्ख्यातत्वात् ।

एवकारश्चैवमाम्नायते—'त्रीणि ह वै यज्ञस्योदराणि यद् गायत्री बृहत्य-नुष्टुप् च । अत्र ह्येवावपन्ति अत एवोद्वपन्ति' इति । ननु मा भूतामन्य-त्राऽऽवापोद्वापौ विवक्षितदेशेषु कथं प्राप्नुतः ? इति चेत् । अनेन वाक्येन तद्विधानात्, इति प्राप्ते, ब्रूमः—नचायमर्थवादः, अनन्यशेषत्वात् । नाप्यनुवादः, अपूर्वार्थत्वात् । तस्मात् पवमानेष्वेव गायत्र्यादिषु आवापोद्वापौ" । .

कण्वरथन्तरं स्वयोनावेव इति निर्द्धारणम्

चतुर्विंशे तु कण्वरथन्तरं स्वयोनावेव—
"बृहद्रथन्तरैकीययोनौ कण्वरथन्तरम् ।
रथन्तरस्यैव योनौ किं स्वयोनावुताऽग्रिमः ॥
चोदकस्याविशेषेण द्वितीयो नामसाम्यतः" ।
अनङ्गत्वान्नातिदेशः स्वयोनौ पठितत्वतः ।

वैश्यस्तोमे पृष्ठस्तोत्रे सामविशेषो विहितः—'कण्वरथन्तरं पृष्ठं भवति' ( ताण्ड्य १८।६ ) इति । प्रकृतौ पृष्ठस्तोत्रे बृहद्रथन्तरसामनी विकल्पिते, 'त्वामिद्धि हवामहे' (पू० आ० ३।१।५।२) इतीयमृक् बृहतो योनिः । 'अभि त्वा शूर' (पू० आ० ३।१।५।१) इति रथन्तरस्य । 'पुनानः सोम' (पू० आ०

५–१–३–१ ) इति कण्वरथन्तरस्य । तत्र बृहद्रथन्तरयोरन्यतरस्य साम्नो-र्योनौ कण्वरथन्तरं गेयम् । कुतः ? चोदकप्राप्तयोर्विशेषनियामकाभावात् । अथवा रथन्तरस्यैव योनौ गेयम् । कुतः ? रथन्तरेति नामसाम्यस्य धर्मातिदेशार्थत्वेन नियामकत्वात् । नैतद् युक्तम्, बृहद्रथन्तरसाम्नोरेव प्रकृतावाङ्गत्वेन विधानम्, न तु तद्योन्योः । अतो नास्ति तयोः अतिदेशतः प्राप्तिः । तस्मात् 'स्वयोनौ गेयमिति' परिशिष्यते । प्राप्तिश्च सामगानामुत्तराग्रन्थपाठादवगन्तव्या । एवं सति श्रुतहान्यश्रुतकल्पने न भविष्यतिः" ॥

पञ्चविंशे तु विशेष-व्यवस्था

पञ्चविंशे तु कण्वरथन्तरं स्वकीययोरेवोत्तरयोर्गेयम—
"सन्देहनिर्णयौ पूर्ववदेवोत्तरयोर्ऋचोः ।
योनित्यागः समश्चेन्न तृचशब्देन बाधनात् ॥

'एकं साम तृचे क्रियते' इति श्रुते, कण्वरथन्तरसाम्नः ऋचां त्रयमाश्रयः । तत्रैका स्वयोनिः इतरे स्वयोन्युत्तरे । एवं बृहद्रथन्तरसाम्नोर्द्रष्टव्यम् । तत्र बृहदुत्तरयोः रथन्तरोत्तरयोर्वा अतिदेशप्राप्त्यविशेषेण स्वेच्छया गेयमित्याद्यः पक्षः । नामसाम्याद्रथन्तरोत्तरयोरेव गेयमिति द्वितीयः पक्षः । प्राकृतावृचोः साक्षादङ्गत्वाभावेऽपि सामद्वारकमङ्गत्वमङ्गीकृत्य चोदकप्राप्त्या पक्षद्वयोपन्यासः । योनिवदुत्तरयोर्ग्रन्थपठितत्वात् स्वयोन्युत्तरयोर्गेयमिति तृतीयः पक्षो राद्धान्तः । बृहद्रथन्तरोत्तरयोः स्वयोन्युत्तरयोर्वा गीयताम् । सर्वथापि स्वयोन्नृक्त्याग ऋगन्तरपरिग्रहश्च समानः । तथा सति चोदकोऽत्र प्रापकः इति पूर्वपक्षिणोऽभ्यधिका शङ्का । तृचशब्दः समानच्छन्दस्कानामेकदेवत्यानामृचां त्रये प्रसिद्धः । अतस्तृचश्रुत्या प्रत्यक्षया चोदकप्राप्तस्य बाधः इति राद्धान्ताशयः" इति ॥

तिसृष्वित्यग्रिम-तृचव्यवस्था

पञ्चमपादस्य द्वितीयेऽधिकरणे तिसृष्वित्यग्रिमस्तृचो विवक्षित:—

"तृचाद्यासु तृचे वाऽऽद्ये तिसृष्वित्युच्यतेऽग्रिमः ।
त्रिच्छन्दस्त्वात् प्राकृतं स्यात् क्रमादत्र तृचोऽखिलः ॥

एकसङ्ख्यायास्त्रिसङ्ख्यायाश्च व्यतिषङ्गविधानात् 'एकत्रिक'नामकः कश्चित् क्रतुर्भवति । स चैवं श्रूयते–'अथैष एकत्रिकस्तस्यैकस्यां बहिष्पवमानं, तिसृषु होतुराज्यम् । एकस्यां मैत्रावरुणस्य, तिसृषु, ब्राह्मणाच्छंसिनः । एकस्यामच्छावाकस्य त्रिसृषु माध्यन्दिनः पवमानः' इति । सन्ति प्रकृतौ माध्यन्दिनपवमानस्य त्रयस्तृचाः–'उच्चा ते जातम्', इत्ययं ( उ० आ० १ । ८ । १-३ ) प्रथमो गायत्रीच्छन्दस्कः । 'पुनानः सोम' इत्ययं ( उ० आ० १ । ९ । १-३ ) द्वितीयो बृहतीच्छन्दस्कः ।

'प्र तु द्रव' इत्ययं ( उ० आ० ११ । १० । १-३ ) तृतीयस्त्रिष्टुप्छन्दस्कः । एतदेवाभिप्रेत्य श्रुतम्—'त्रिच्छन्दा आपापो माध्यन्दिनः' (ताण्ड्य ३।७) इति। एवं सति एकत्रिकस्य माध्यन्दिनपवमाने तिसृष्विति यदुक्तं तत्र त्रयाणां तृचानामाद्यास्तिस्रः ऋचो ग्राह्याः ? किं वा प्रथमतृचस्थाः क्रमपठितास्तिस्रः ? इति संशयः । तत्र त्रिच्छन्दस्त्वश्रुत्या प्रबलया दुर्बलं पाठक्रमं बाधित्वा प्रथमपक्षो ग्राह्यः इति प्राप्ते, अभिधीयते—यदेतत् त्रिच्छन्दस्त्वं तदेतत् प्राकृतम् । तत्र छन्दस्त्रयोपेतस्य तृचत्रयस्योपदिष्टत्वात् । विकृतावपि तत्सर्वमतिदिष्टमिति चेत् ? बाढम् । अत एव पाठक्रमोऽप्यतिदिष्टः, तथा सति प्रक्रान्तगायत्रीछन्दस्कस्य तृचस्य समाप्तौ सत्यां पश्चाद् बृहतीच्छन्दस्के तृचे प्रथमायाः ऋचः प्रारम्भावसरः । स चारम्भस्मितसृषु इति विशेषविधानेन बाध्यते । तस्मादाद्यस्तृचो निखिलो ग्राह्यः" ।

धूर्गानस्यैकस्यामृचि कर्त्तव्यत्वमिति निर्णयः

तृतीये धूर्गानमेकस्यामृचि कर्त्तव्यम्—
"तृचे स्यादृचि वैकस्यां धूर्गानं प्रकृताविव ।
तृचे भवेदिहैकस्यां श्रुत्याऽऽवृत्तिविधानतः ।।

एकत्रित एव क्रतौ व्यतिषङ्गेणैकस्यां तिसृषु च स्तोत्रेषु सम्पाद्यमानेषु यद्धूर्गानं तत् किं तृचे स्यात् ? उतैकस्यामृचि ? इति संशयः । तत्र चोदकेन तृचे भवेदिति प्राप्ते, ब्रूमः—इहैकत्रिकक्रतौ एकस्यामृचि धूर्गानं भवेत् । कुतः ? 'आवृत्तं धूर्षु स्तुवते' इति आवत्तिविधानात् । ननु तृचे गानेऽपि साम्नस्त्रिरावृत्तिर्भवेत् ? न, आवृत्तेः स्तुतिविशेषणत्वात् । गुणसङ्कीर्त्तनपरः पदसमूहः स्तुतिः तच्च ऋगावृत्तिं विना तिसृष्वृक्षु न सिध्यति । तस्मादेकस्यां धूर्गानम्" ।

आगमात् स्तोमवर्धनप्रकारनिर्देशः

षष्ठे स्तोमवृद्धिरागमाद् भवेत्—
"स्तोमवृद्धिः किमभ्यासादागमाद्वाऽग्रिमो यतः ।
तत् कल्प्यमश्रुतं मैवं सङ्ख्याऽऽवापादिलिङ्गतः ।

विवृद्धस्तोमकः क्रतुरेवमाम्नायते,—एकविंशेनातिरात्रेण प्रजाकामं याजयेत्, त्रिणवेनौजस्कामम्, त्रयस्त्रिंशेन प्रतिष्ठाकामम्' इति । प्रकृतिगतेभ्यः त्रिवृत्पञ्चदशादिस्तोमेभ्यो विवृद्धाः एकविंशत्रिणवत्रयस्त्रिंशस्तोमाः । तेषु किं प्राकृतानां साम्नाम् अभ्यासाद् वृद्धिर्भवति ? किं वा सामान्तरागमात् ? इति संशयः । अश्रुतस्य सामागमस्य कल्पयितुमशक्यत्वाद् अभ्यासाद् वृद्धिः, इति प्राप्ते ब्रूमः—अभ्यासोऽपि न साक्षाच्छ्रूतः, किन्त्वेकविंशादिसङ्ख्यापूरणाय कल्प्यते, सङ्ख्या च द्रव्यगता, भिन्नद्रव्यैरेव पूर्य्यते न त्वेकद्रव्यावृत्या । न ह्यष्टकृत्व एकघटमानीय 'मद्गृहे सन्त्यष्टौ घटाः' इति व्यवहरन्ति। ततः स्तोमावयवद्रव्यगता सङ्ख्या तदवयवभूतानां साम्नां पदार्थानां भेदं गमयति । स च भेदः सामान्तरागमलिङ्गम् । 'अत्र ह्येवावपन्ति' इत्यावापो-

द्देशेन देशविशेषविधिरपरं लिङ्गम्। सामान्तरोत्पत्त्यर्थत्वमन्यल्लिङ्गम्; तस्मादागमेन वृद्धिः।

बहिष्पवमानवृद्धौ ऋच आगमः

सप्तमे बहिष्पवमानवृद्धावृच आगमः—

" बहिष्पवमानद्धौ साम्नर्चा वाऽभिपूरणम्।
साम्ना पूर्वोक्तितो मैवं सामैकत्वपराक्त्वतः॥

प्रकृतौ प्रातःसवने बहिष्पवमानस्य अतिवृद्धः स्तोमः, तस्य विकृतिषु वृद्धौ सत्यां पूर्वोक्तरीत्या सामान्तरागमे प्राप्ते, ब्रूमः—'एकं हि तत्र साम' इति बहिष्पवमानं प्रकृत्य सामैकत्वमाम्नायते। अतो न सामान्तरागमः सम्भवति। एवं तदभ्यासेन सङ्ख्यापूरणमस्तु इति न वाच्यम्, 'पराग् बहिष्पवमानेन स्तुवन्ति' इति पराक्शब्देनाभ्यासप्रतिषेधात्; तस्मादृगागमः"।

एकस्य साम्नस्तृचे गेयत्वनिर्णयः

षष्ठपादस्याद्ये एकं साम तृचे गेयम्—

"सामैकस्यां तृचे वा स्यादाऽऽद्यः स्वाध्यायवद् भवेत्।
वचनाल्लिङ्गसंयुक्तात् स्तोत्रे साम तृचे भवेत्॥

पवमानाज्यपृष्ठादिस्तोत्रेषु यद् विहितं रथन्तरबृहद्वैरूपादिसाम अध्येतारः एकस्यामृच्यधीयते, तत् किं स्तोत्रप्रयोगकालेऽप्येकस्यामृचि गेयम्? किं वा तृचे गेयम्? इति संशयः। अध्ययनस्यानुष्ठानार्थत्वाद् यथाध्ययनमेकस्यामृचि साम्नः कृतं तथैकस्यामेव साम गेयमिति पूर्वपक्षः। 'अष्टमाक्षरेण प्रथमाया ऋचः प्रस्तौति, द्व्यक्षरेणोत्तरयोः' इति तिसृष्वृक्षु प्रस्तोत्रा गातव्यभागो निरूप्यते, तदिदं तृचस्य लिङ्गम्। 'ऋक् सामोवाच मिथुनीसम्भवाव' इत्यादौ ऋग्देवतासामदेवतयोः सम्वादरूपेऽर्थवादे सामदेवतैकामृचं द्वे ऋचौ च प्रत्याख्याय तिस्रः ऋचोऽङ्गीचकार। तदिदं अपरं लिङ्गम्। ताभ्यां लिङ्गाभ्यामुपबृंहिताद् एकं साम तृचे क्रियते स्तोत्रियम्' इति वचनात् तृचे गातव्यमिति'।

स्वदृक्शब्दस्य मीलनावधित्वकथनम्

द्वितीये स्वदृक्शब्दो मीलनावधिः—

"स्वदृक्शब्दे वीक्षणे च किं स्यादङ्गाङ्गिताऽथवा।
मीलनावधिताऽऽद्योऽस्तु भिन्नवाक्येन तद्विधेः॥
प्रतिशब्देनावधिर्हि द्योत्यो वाक्यं न भिद्यते।
सत्येवं मीलनस्यापि विधिर्नोत्तरयोर्भवेत्॥

अस्ति रथन्तरसाम्नो योनौ 'अभि त्वा शूर' इत्यस्यामृचि स्वदृक् शब्दः 'ईशानमस्य जगतः स्वदृशम्' ( उ० आ० १।११।१ ) इत्याम्नातः। अस्ति चोद्गातुः कर्तृता तृचे 'रथन्तरे प्रस्तूयमाने सम्मीलयेत्, स्वदृशं प्रतिवीक्षेत' (ताण्ड्यब्रा०७।७)इति श्रुतेः। तत्र संशयः। किं स्वदृक्शब्दोच्चारणवीक्षणयो-

रङ्गाङ्गिभावोऽत्र विधीयते ? किं वा विधीयमानसम्मीलनावधित्वेन स्वदृक्-शब्दोच्चारणं निर्दिश्यते, इति। तत्र संमीलनवाक्यात् वीक्षणवाक्यं भिन्नम्। ततो न मीलनावधित्वेनान्वयः सम्भवतीति। किञ्च वीक्षेतेति लिङ्प्रत्ययोऽत्र विधायकः श्रूयते। ततः स्वदृक्शब्दोच्चारणं वीक्षणाङ्गम्, वीक्षणं वा तदङ्गम् इत्यङ्गाङ्गिभावोऽभ्युपेयः। तथा सति स्वदृक्शब्दरहितयोरुत्तरयोर्ऋचोर्गीयमाने रथन्तरेऽपि विहितसम्मीलनानुवृत्तिः फलिष्यतीति पूर्वपक्षः। "स्वदृशं प्रति"इत्यनेन प्रतिशब्देन स्वदृक्शब्दोच्चारणस्य मीलनकालावधित्वं द्योत्यते। न चात्र भिन्नवाक्यत्वम्, एकवाक्यत्वसम्भवात्। तथाहि विरोधपरिहाराय स्वत एव प्राप्तत्वात् वीक्षणं न विधेयम्। तथा सति आ-स्वदृक्शब्दोचारणात् सम्मीलयेदित्येकं वाक्यं सम्पद्यते। एवं सत्युत्तरयोर्ऋचोर्मीलनविध्यभावः फलिष्यतीति राद्धान्तः"

**बृहद्रथन्तरयोर्दिन-भेदेन प्रयोग-निर्णयः** तृतीये बृहद्रथन्तरयोर्दिनभेदेन प्रयोगः—

'गवामयनिके पृष्ठ्यषडहे प्रत्यहं द्वयम्।
बृहद्रथन्तरं चोत भवेत् किञ्चित् क्वचिद्दिने॥
द्वन्द्वगर्भबहुव्रीहेराद्योऽन्त्येऽपि समो ह्यसौ।
अन्योन्यनिरपेक्षस्य चोदकादन्तिमो भवेत्॥

द्वादशाहे पृष्ठ्यः षडहः उत्पन्नः। तत्र षण्णामप्यह्नां क्रमेण रथन्तरबृहद्वैरूपवैराजशाक्वररैवतानि सामानि विहितानि। गवामयने तु विकृतिरूपीयः पृष्ठ्यः षडहः। तत्र श्रूयते—'पृष्ठ्यः षडहो बृहद्रथन्तरसाम' इति चोदकप्राप्तयोः बृहद्रथन्तरयोःपुनर्विधानात् वैरूपादिनिवृत्तिः। ततः शिष्यमाणं बृहद्रथन्तरं सामद्वयं किं प्रत्यहं कर्तव्यम् ? किं वा केषुचिदहःसु बृहत्, केषुचिद्रथन्तरम् ? इति संशयः। बृहच्च रथन्तरञ्च बहद्रथन्तरे ते च सामनी यस्य इति द्वन्द्वगर्भिते बहुव्रीहावितरेतरयोगद्वन्द्वेन साम्नो साहित्यं प्रतीयते। ततः प्रत्यहं सामद्वयम् इति पूर्वपक्षः। ते सामनी यस्याह्नः इत्यह्नो यद्यन्यपदार्थत्वं तदा भवदुक्तमेव स्यात्, इह तु षडहोऽन्यपदार्थः। तथा सति षडहे द्वयोः साम्नोः साहित्यं सिद्धान्तेऽपि समानम्। प्रकृतौ साम्नोरन्योन्यनिरपेक्षत्वादिहापि निरपेक्षत्वमेव सामचोदकेनातिदिश्यते ; तस्मात् केषुचिदहःसु किञ्चित् साम इति राद्धान्तः'।

**सर्वपृष्ठस्य यथोक्तदेशे विहितत्वनिर्णयः** पञ्चमे सर्वपृष्ठे यथोक्तदेशे पृक्तानि—

'किं सर्वपृष्ठे सर्वाणि पृष्ठदेशे यथोक्ति वा।
'पृष्ठशब्दात् पृष्ठदेशे वचनात् तु व्यवस्थितिः।

इदमाम्नायते—'विश्वजित् सर्वपृष्ठः' इति। षडहे षट्स्वहःसु क्रमेण रथन्तरं बृहद् वैरूपं इत्यादिभिः षड्भिः सामभिः पृष्ठस्तोत्रं, निष्पादितम्। तानि सर्वाणि पृष्ठसामानि यस्मिन् विश्वजिति सोऽयं सर्व-

पृष्ठः तत्र माध्यन्दिनपवमानमैत्रावरुणसाम्नोरन्तरालभूते पृष्ठस्तोत्रदेशे किं सर्वाणि पृष्ठसामानि कार्याणि ? किं वा यथावचनं देशव्यवस्था ? इति संशयः । पृष्ठकार्यगमकेन पृष्ठशब्देन पृष्ठदेशे प्राप्ते, वचनेन देश-विशेषो व्यवस्थाप्यते । वचनं चैवमाम्नायते--'पवमाने रथन्तरं करोत्या-र्भवे बृहन्मध्य इतराणि वैरूपं होतुः पृष्ठं वैराजं ब्रह्मसाम शाक्वरं मैत्रा-वरुणस्य रैवतमच्छावाकस्य'--इति । वचनं हि न्यायाद् बलीयः, तस्माद्-देशविशेषो व्यवस्थितः ।

**वैरूपवैराजयोरुक्थ्यषोडशिपृष्ठगतत्वनिर्णयः**

षष्ठे वैरूपवैराजे उक्थ्यषोडशिनोः पृष्ठगते--
''कात्स्न्यर्याद् वैरूपवैराजे उक्थ्यषोडशिनोरुत ।
पृष्ठे स्यात् क्रतुसंयोगादाऽऽद्याऽन्तः पृष्ठलिङ्गतः ॥

इदमाम्नायते-'उक्थो वैरूपसामैकविंशः षोडशो वैराजसामेति' । तत्र कृत्स्ने उक्थ्ये 'वैरूपं' साम, कृत्स्ने षोडशिनि, वैराजम्' 'वैरूपं' साम यस्मिन्नुक्थ्ये क्रतौ-'वैराजं' साम यस्मिन् षोडशिनि क्रतो, इत्येवं क्रतु-सम्बन्धः प्रतीतेः । मैवम् । प्रकृतौ रथन्तरसामा बृहत्सामा इत्यवंविधस्य निर्देशस्य पृष्ठस्तोत्रविषयत्वदर्शनादत्रापि तन्निदेशेन पृष्ठलिङ्गेन पृष्ठकार्य्ये वैरूपं वैराजं च भवितुमर्हति । क्रतुसम्बन्धस्तयोः पृष्ठद्वारेणोपपद्यते'' ।

**त्रिवृदग्निष्टुति त्रिवृत्-शब्दस्य स्तोमत्व-निर्धारणम्**

सप्तमे त्रिवृदग्निष्टुत्स्तोम एव--
"त्रिवृदाग्निष्टुदित्येतत् सर्वत्र स्तोम एव वा ।
आद्यस्त्रैगुण्यवाचित्वादन्त्यस्तोमेऽस्य रूढितः ॥

एवं श्रूयते--'त्रिवृदग्निष्टुदग्निष्टोमः' ( ताण्ड्य ३ प० ) इति । किं त्रिवृत्त्वमाग्निष्टति क्रतौ सर्वेषु साधनेषु सम्बध्यते ? किं वा स्तोममात्र-सम्बन्धि तत् ? त्रिवृद्रज्जुरित्यादो त्रिवृच्छब्दस्य त्रैगुण्यत्वाचित्वदर्शनाद-त्रापि क्रतुसाधनेषु या या सङ्ख्या श्रूयते सा सर्वा त्रिवृत्त्वेन विक्रियते इति प्राप्ते, ब्रूमः--यद्यपि त्रिवृच्छब्दोऽवयवप्रसिद्धया लोके त्रैगुण्यं ब्रूते, तथापि वेदे रूढ्या स्तोमवाचकः, त्रिवृद् बहिष्पवमानः इत्युक्त्वा स्तोत्रि-याणां नवानामृचामनुक्रमणेन स्तोमविषयमेव त्रिवृत्त्वम्" ।

**संसवादेः पृष्ठत्वनिर्णयः**

अष्टमे संसवादौ पृष्ठत्वम्--
"संसवादौ द्वयोरेकं पृष्ठं यद्वा समुच्चितम् ।
एकं प्रकृतिवद् विश्वजिद्वदन्यत्र चेतरत् ॥
वचनाद् विश्वजित्येते साम्नी द्वे स्तोत्रयोर्द्वयोः ।
नेहास्ति तत् पृष्ठ एव साहित्यं स्यात् पुनर्विधेः ॥

इदमाम्नायते--'संसव उभे कुर्याद्, गोसव उभे कुर्याद्, अभिजित्यै-काहः बभे बृहद्रथन्तरे कुर्यात्' इति । किमत्र बृहद्रथन्तरयोरेकं पृष्टस्तुतौ

इतरदन्यस्तुतौ स्यात् ? किं वा समुच्चितमुभयं पृष्ठस्तुतौ ? इति संशयः। प्रकृतौ द्वयोर्विकल्पितत्वादेकस्मिन् प्रयोगे एकस्य पृष्ठत्वादन्यत्रापि तथात्वं युक्तम्, तथा सत्यवशिष्टं साम सर्वपृष्ठविश्वजिन्न्यायेन स्तोत्रान्तरे प्रयोक्तव्यम् इति पूर्वपक्षः। तादृग्वचनाभावेनात्र विश्वजिद्वैषम्यात् प्रकृतिवद् विकल्पे सति पुनर्विधानवैयर्थ्यात् समुच्चयः इति राद्धान्तः"।

**बृहद्यवखादिराणां नियतत्वकथनम्**

सप्तमपादस्य षोडशाधिकरणे बृहद्यवखादिरा नियताः—

"बृहद्यवः खादिरश्च विकल्प्या नियता उत।
विकल्प्याश्चोदकप्राप्तेर्नियताः स्युः पुनर्विधेः॥

क्वचिद् विकृतौ श्रूयते—'बृहत् पृष्ठं भवति' इति। त्रैधातवीये श्रूयते—'यवमयो मध्यमः' इति। वाजपेये श्रूयते—'खादिरो यूपो भवति' इति। तत्र बृहद्रथन्तरयोः व्रीहियवयोः खादिरवैल्वादीनाञ्च प्रकृतौ विकल्पितत्वादत्रापि चोदकेन विकल्पिता इति चेत् ? न। पुनर्विधानवैयर्थ्यात्। परिसंख्या तु दुष्टत्वान्न शङ्क्या। तस्मान्नियताः कोटचन्तरं त्वर्थान्निवर्तते"।

**ब्रह्मसाम्नो विकल्पितत्वकथनम्**

अष्टमपादस्य षष्ठाधिकरणे विप्रगानं विकल्पितम्—

'उन्नेयो ब्रह्मगानस्य निषेधो विहितस्तुतिः।
विकल्पितो वा शून्योऽपि वपोत्खेद इव स्तुतिः॥
विध्यनन्वयतोऽस्तोत्रं ब्रह्मोद्गाता तथा सति।
विषयैक्याद् विकल्पोऽत्र षोडशिग्रहवन्मतः॥

आधाने वामदेव्यादिसाम्नां गानानि विहितानि। आधान एवेदमपरमाम्नायते—'उपवीता वा एतस्याग्नयो भवन्ति, यस्याग्न्याधेये ब्रह्मा सामानि गायति' इति। उपशब्दः सामीप्यं ब्रूते। वीताः विगताः कालविलम्बमन्तरेण परैस्त्यक्ता इत्यर्थः। अनया निन्दया ब्रह्मणः सामगाननिषेध उन्नीयते, स निषेध उद्गातुर्विहितं वामदेव्यादिसामगानं स्तौति। ननु ब्रह्मणः सामगानमप्रसक्तम्। ततस्तन्निषेधोऽत्यन्तमसम्भावितत्वाच्छशविषाणवच्छून्यः, नहि वन्ध्यापुत्रो वा तद्वधो वा सम्भावयितुं शक्यते। तथा सति तादृशेन कथं स्तुतिः ? इति चेत् वपोत्खेदवदिति ब्रूमः—'स आत्मनो वपामुदखिदत्'—इत्यनेनात्यन्तासम्भावितार्थेन यथा प्राजापत्यस्य तूपरस्य[1] अजस्य विधिः स्तूयते, तद्वत् इति प्राप्ते, ब्रूमः—नेदं वामदेव्यादिसामविधीनां स्तोत्रं भवितुमर्हति, विधीनामनेकत्वेन स्वस्वसन्निधिपठितैरर्थवादैर्निराकाङ्क्षत्वेन च तदन्वयायोगात्। का तर्ह्यस्य वाक्यस्य

1. तूपरस्य शृङ्गविहीनः पशुरर्थः। स च अजातशृङ्गः पतितशृङ्गो वा भवति। तथाहि ताण्ड्यब्राह्मणस्य चतुर्थप्रथमे—'ताः सर्वमन्याद्यमाप्नुवंस्ता एतास्तूपराः' इत्यस्य ताः 'पतितशृङ्गाः गावः सर्वर्तुभवमन्नाद्यम् अदनीयम् अन्नं प्राप्नुवन्। ता गावस्तूपराः शृङ्गहीना दृश्यन्ते' इति भाष्ये तूपरशब्दस्तथैव व्याख्यातो भाष्यकारेण।

गतिः ? इति चेत्, उच्यते–ब्रह्मशब्दोऽत्र विप्रत्वजातिद्वारेणोद्गातारं ब्रूते, यस्य च गानं तस्मिन्निषेधे सति विधिनिषेधाभ्यामेकविषयाभ्यामुद्गातुर्गानं विकल्प्यते"।

पर्यग्निकरणे ब्रह्मसाम्न उत्कर्षविधानम्

एकादशाध्यायस्य द्वितीयपादे द्वादशेऽधिकरणे ब्रह्मसामन्युत्कर्षः—

"पर्यग्निकरणे त्याग आलम्भो ब्रह्मसामनि।
कर्मशेषनिषेधश्च कर्मान्तरविधिर्भवेत् ॥
किं वोत्कर्षोऽवशिष्टस्य ह्यारण्योक्तिवदाऽऽदिमः।
अदृष्टवाक्यभेदाप्तेर्द्रव्यभेदेन चान्तिमः ॥

वाजपेये 'सप्तदश प्राजापत्यान् पशून् सञ्चिनुते' इति प्रकृत्य श्रूयते— 'तान् पर्यग्निकृतानुत्सृजन्ति' इति, 'ब्रह्मसाम्न्यालभते' इति। तेषु सप्तदशसु पशुषु पर्यग्निकरणेऽनुष्ठिते सत्युत्तरकालभावी कर्मशेषं उत्सर्गशब्देन निषिध्यते। अश्वमेधे 'पर्य्यग्निकृतान् आरण्यानुत्सृजन्ति' इत्यत्र कर्मशेषनिषेधस्य प्रतिपन्नत्वादत्रापि तथात्वेन सप्तदश पशवः पर्यग्निकरणान्ताः समाप्याः। आलभतिना च ब्रह्मसामकाले कर्मान्तरं विधीयते इति प्राप्ते, ब्रूमः-कर्मान्तरविधौ सप्तदशपशुजन्या दृष्टाद् भिन्नं किञ्चिददृष्टं कल्प्येत, वाक्यभेदश्च प्राप्नुयात्। किञ्च 'ब्रह्मसाम्न्यालभते' इत्यत्र द्रव्यदेवतयोरश्रवणात् न कर्मान्तरविधिः सम्भवति। तस्मात् पर्यग्निकरणानन्तरमेव कार्यस्य सप्तदशपशूनामालम्भादिशेषस्य ब्रह्मसामकाले उत्कर्षो विधीयते, तथा सति अर्थप्राप्तः, पर्यग्निकरणानन्तरभाविकर्मव्यापारोपरम उत्सर्गशब्देनानूद्यते।

मन्त्रलक्षणमारभ्य ब्रह्मसामोत्कर्षपर्यन्तैः[1] पूर्वमीमांसागतैः द्विषष्टिसंख्याकैर्विचारैः सामवेदस्य क्रतुषूपयोगो विस्पष्टीकृतः। अतः स प्रयोजनवत्त्वादृग्वेदादिवदेवावश्यं व्याख्यातव्यः"।

साम्नामृगाश्रयत्वात् तेषां व्याख्यानयोग्यत्वप्रतिपादनम्

नन्वस्मिन् सामवेदे ब्राह्मणभागस्य व्याख्यातुं योग्यत्वेऽपि मन्त्रभागस्य न व्याख्यानयोग्यतास्ति, तत्रत्यानां मन्त्राणां गीतिमात्रात्मकत्वात्। न खलु पदवाक्यव्यतिरिक्ताया स्वरस्तोभादिसाध्यायां गीतौ क्रियाकारकयोजनाभिव्यङ्ग्यः कश्चिदर्थोऽस्ति, यस्याभिव्यक्तये भवता गीतिर्व्याख्यायेत। यत्तु स्वरादिलक्षणविशेषकथनेन गीतिव्याख्यानं तत्पूर्वाचार्यैरेव तत्तल्लक्षणमन्त्रग्रहणेषु सम्पादितम्–इति न तत्र त्वया यतितव्यम्। अतः कथं भवतः मन्त्रभागव्याख्यानम् ?

---

१. चतुःषष्टितमपृष्ठादारभ्य नवनवतितमपृष्ठपर्यन्तमत्रत्यो ग्रन्थांशो माधवाचार्यप्रणीतजैमिनीयन्यायमालाविस्तरस्य तत्तदध्यायादुद्धृतोऽत्र विद्यते इति स्फुटमवधेयम्।

अत्रोच्यते—न तावद् गीतिर्निराश्रया, तस्याः ऋच्याश्रितत्वात्। अत एव छन्दोगा उपनिषद्येवामनन्ति—'तस्मादृच्यध्यूढं साम गीयते'—इति (छा० उप० १।६) गीत्याश्रयभूता सेयमृगपि मन्त्र एव 'तेषामृग् यत्रार्थवशेन पादव्यवस्था' इति मन्त्रविशेषत्वेन सूत्रितत्वात् (जै० सू० २।१।३२); ऋगात्मकस्य तु मन्त्रस्य क्रियाकारकान्वयाभिव्यङ्ग्योऽर्थो विद्यते। स च क्रत्वनुष्ठानकालेऽनुस्मर्त्तव्यः इति ऋग्व्याख्यानमवश्यं कर्त्तव्यम्।

**मन्त्रैरर्थानुस्मरणत्व-निर्णयः** मन्त्रैरर्थानुस्मरणं तु प्रथमाध्यायस्य द्वितीयपादे चतुर्थाधिकरणे निर्णीतम्—

"मन्त्रा उरु प्रथस्वेति किमदृष्टैकहेतवः।
यागेषूताः पुरोडाशप्रथनादेश्च भासकाः॥
ब्राह्मणेनापि तद्गानान् मन्त्राः पुण्यैकहेतवः।
न तदभानस्य दृष्टत्वात् दृष्टं वरमदृष्टतः॥

उरु प्रथस्वेत्ययं कश्चिन्मन्त्रः। तस्यायमर्थः—भो पुरोडाश, त्वं उरु विपुलता यथा भवति तथा प्रसर इति। एवमादयो मन्त्राः यागप्रयोगेषूच्चार्य्यमाणाः अदृष्टमेव जनयन्ति। न त्वर्थप्रकाशनाय तदुच्चारणम्, पुरोडाशप्रथनलक्षणस्यार्थस्य ब्राह्मणवाक्येनापि प्राप्तत्वात्। 'उरु प्रथस्वेति पुरोडाशं प्रथयति' इति हि ब्राह्मणवाक्यम्। नैतद् युक्तम्, अर्थप्रत्यायनस्य दृष्टप्रयोजनसम्भवे सति केवलादृष्टस्य कल्पयितुमशक्यत्वात्। तस्मात् दृश्यमानार्थानुस्मरणमेव यागप्रयोगे मन्त्रोच्चारणस्य प्रयोजनम्। ब्राह्मणवाक्येनार्थानुस्मरणसम्भवे मन्त्रेणैवानुस्मरणीयमिति यो नियमः, तस्य दृष्टासम्भवात् अदृष्टं प्रयोजनमस्तु"।

**मन्त्रैरर्थानुस्मरणत्व-विषये गुरुमत-विवेचनम्** अस्मिन्नेवाधिकरणे मतान्तरेण[1] पूर्वोत्तरपक्षावाह—

"मन्त्रब्राह्मणयोर्यद्वा कलहो विनियोजने।
न मन्त्रलिङ्गसिद्धार्थमनुवक्तीतरद् यतः॥

अस्य मन्त्रस्य लिङ्गेन विनियोगे ब्राह्मणवाक्यमविवक्षितार्थं स्यात्, वाक्येन विनियोगे मन्त्रलिङ्गं न विवक्ष्येत, इत्युभयोर्विरोधादप्रामाण्यं चोदनायाः इति पूर्वपक्षः। नायं विरोधः प्रबलेन लिङ्गेन विनियोगसिद्धौ वाक्यस्यानुवादकत्वादिति राद्धान्तः" (जै० न्या० वि० १।२।४)।

इति सामवेदस्य भाष्योपक्रमणिका समाप्ता।

---

१. प्रभाकरस्य मतेनेति भावः।

शुक्लयजुर्वेदान्तर्गतायाः

# काण्वसंहितायाः

सायणाचार्यकृता

## भाष्यभूमिका

शुक्लयजुर्वेदान्तर्गतायाः

# काण्वसंहितायाः

## भाष्यभूमिका

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ २ ॥
यत्कटाक्षेण तद्रूपं दधद् बुक्कमहीपतिः ।
आदिशत् सायणाचार्यं वेदार्थस्य प्रकाशने ॥ ३ ॥
ये पूर्वोत्तरमीमांसे ते व्याख्यायाऽतिसंग्रहात् ।
कृपालुः सायणाचार्यो वेदार्थं व्याकरोत् खलु ॥ ४ ॥
ऋग्यजुःसामवेदा ये व्याख्यातास्तेषु तद्यजुः ।
कृष्णं शुक्लमिति द्वेधा तत् कृष्णं तैत्तिरीयकम् ॥ ५ ॥
वैशम्पायनशिष्येण याज्ञवल्क्येन यद् यजुः ।
अधीत्य वान्तमाचार्यकोपभीतेन योगिना ॥ ६ ॥
गुरुः शिष्यमुवाचेत्थं क्रुद्धः केनाऽपि हेतुना ।
प्रत्यर्पय मदीयां त्वं विद्यामित्यर्थयत् स च ॥ ७ ॥
योगसामर्थ्यतो विद्यां मूर्तां कृत्वाऽवमत् तदा ।
गृह्णीत तद्यजुर्वान्तमित्यन्यान् गुरुरब्रवीत् ॥ ८ ॥
अन्ये तित्तिरयो भूत्वा किञ्चित् तानप्यभक्षयन् ।
प्रवर्तितः खण्डशस्तैर्न सम्यग् बध्यते नृभिः ॥ ९ ॥
आध्वर्यवं क्वचिद् हौत्रं क्वचिदित्यव्यवस्थया ।
बुद्धिमालिन्यहेतुत्वाद् यजुः कृष्णमितीर्यते ॥ १० ॥
याज्ञवल्क्यस्ततः सूर्यमाराध्याऽस्मादधीतवान् ।
व्यवस्थितप्रकरणं यजुः शुक्लं तदीर्यते ॥ ११ ॥
पौराणिकीं कथामेतां वेदव्याख्यान आदरात् ।
आदिशन्मह्यमाचार्याः श्रुतावपि मया श्रुतम् ॥ १२ ॥
काण्ववेदगतं विद्या वंशब्राह्मण ईर्यते ।
यजूंषि शुक्लान्यादित्यान्मुनिः प्रापेत्यपि स्फुटम् ॥ १३ ॥

**वंशब्राह्मणोपक्रमः** अथ वंशः। पौतिमाषीपुत्रः कात्यायनीपुत्राद् इत्यारभ्य, परमेष्ठी ब्रह्मणो ब्रह्म स्वयम्भुब्रह्मणे नम इत्येतदन्तं काण्ववेदस्यान्तिमं वंशब्राह्मणम्। पौतिमाषीपुत्रः कश्चिद्वेदसंप्रदायप्रवर्तको मुनिर्मनुष्याणां गुरुः। स च कात्यायनीपुत्राद् वेदमधीतवान्। परमेष्ठीशब्देन सत्यलोकप्रवर्तो चतुर्मुखोऽभिधीयते। ब्रह्मशब्देनात्र, 'प्रज्ञानं ब्रह्म', 'सत्यं ज्ञानमनन्तं ब्रह्म',

'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' (श्वेता० उप० ४।१०)

इत्यादिवेदवाक्यप्रसिद्धः परमेश्वरो विवक्षितः। तस्य च इतरेषामिवोत्पत्त्यर्थं वेदाऽध्ययनादिव्यवहाराय वा पारतन्त्र्यं, तत् स्वयम्भूशब्देन निवार्यते। तथा च श्वेताश्वतरा आमनन्ति—

न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते।
पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च॥
न तस्य कश्चित् पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम्।
स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाऽधिपः॥
(श्वेता० उप० ६।८, ९)।

यो ब्रह्माणं विदधाति पूर्वं यो वै वेदाश्च प्रहिणोति तस्मै।
तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये।
(श्वेता० उप० ६।१८)।

नमःशब्देन चाऽस्य ब्राह्मणस्य गुरुपरम्पराविषयनमस्कारं प्रत्यङ्गमन्त्रत्वं द्योत्यते। सा च गुरुनमस्काररूपा गुरुसेवा वेदाध्ययनतदर्थविचारतदनुष्ठानानां साफल्याय संपद्यते। तथा च स्मृतिः—

गुरुमुख्याः क्रियाः सर्वा भुक्तिमुक्तिफलप्रदाः।
तस्मात् सेव्यो गुरुर्नित्यं मुक्त्यर्थं सुसमाहितैः॥

**शुक्लयजुर्वेदस्य शाखाविषयको विचारः** ईदृशे चाऽस्मिन् वंशब्राह्मणे वाक्यमेवमाम्नायते— आदित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्त इति। आदित्येनाध्यापितत्वादादित्यान्युच्यन्ते। वाज इत्यन्नस्य नामधेयम्। 'अन्नं वै वाजः' इति श्रुतेः। वाजस्य सनिः दानं यस्य महर्षेरस्ति सोऽयं वाजसनिः। तस्य पुत्रो वाजसनेयस्तस्य याज्ञवल्क्य इति नामधेयम्। तेन याज्ञवल्क्येनैतानि शुक्लयजूंषि महर्षिभ्यः पञ्चदशभ्य आख्यायन्ते समन्तादुपदिश्यन्ते। एवं सति याज्ञवल्क्येन प्रवर्तिताः शुक्लयजुर्विषयाः शाखाः पञ्चदश संपद्यन्ते। तच्छाखाऽध्यायिनश्चरणव्यूहादिग्रन्थे काण्वादिभिः पञ्चदशभिर्नामभिरित्थं व्यवह्रियन्ते—काण्वाः॥ १॥ माध्यन्दिनाः॥ २॥ शापेयाः॥ ३॥ तापायनीयाः॥ ४॥ कापालाः॥५॥ पौण्ड्रवत्साः॥ ६॥ आवटिकाः॥ ७॥ परमावटिकाः॥ ८॥ पराशर्याः॥९॥ वैधेयाः॥१०॥ वैनेयाः॥११॥ औधेयाः॥१२॥ गालवाः॥१३॥ बैजवा॥१४॥ कात्यायनीयाश्च॥१५॥ इति पञ्चदश नामानि (च०व्यू०२ कं०)॥

काण्वसंहितेत्यभिधानस्वार्थनिरूपणम्

तत्र काण्वाभिधेन महर्षिणा लब्धो यजुर्वेदविशेषः काण्वः। तल्लाभश्च स्मर्यते—

युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा॥

यद्यप्ययं वेदः स्वयम्भूपरमेष्ठ्यादिपरम्परया प्राप्त आदित्यशिष्येण याज्ञवल्क्येन बहुभ्यः शिष्येभ्य उपदिष्टस्तथापि महता तपसा तुष्टस्येश्वरस्याऽनुग्रहात् काण्वसम्बन्धितयैव लोके प्रख्यायते। तमेतं काण्ववेदमधीयते विदन्ति वेति व्युत्पत्त्या काण्वशिष्यप्रशिष्यादिपरम्परायां वर्तमानाः सर्वेऽपि काण्वा इत्युच्यन्ते। एवं ज्ञात्वा काण्वादिषु द्रष्टव्यम्।

तत्रेदं काण्ववेदाख्यं शुक्लं यजुः पूर्वं न व्याख्यातं, किन्तु तैत्तिरीयाख्यं कृष्णं यजुरेव व्याख्यातम्। तस्मादिदानीं काण्व-शाखा व्याख्यायते। यद्यप्येनयोः शाखयोराध्वर्यव एव प्रयोगः प्रतिपाद्यते, तथापि मन्त्रपाठविशेषैः प्रयोगविशेषैर्महान् भेदः। स चानुष्ठातृभेदेन व्यवस्थितविषयत्वान्न विकल्प्यते। अत एव, 'स्वाध्यायोऽध्येतव्यः' ( तै० आ० २।१५ ) इति स्वकीयशाखाध्ययनमनुष्ठानविशेषाय विहीतम्।

'स्वाध्यायोऽध्येतव्यः' इत्यस्यार्थविचारणायां प्रभाकरमतोपन्यासः

अत्रैतद् चिन्तनीयम्। किमेतत् स्वविधिप्रयुक्तं माणवकाध्ययनम्? उताऽध्ययनविधिप्रयुक्तम्? इति। तत्र प्रभाकरो मन्यते—स्वाध्यायोऽध्येतव्य इत्यर्थविधिरष्टवर्षमुपनीतं माणवकमध्ययने प्रवर्तयितुं न प्रभवति। अनधीतवेदस्य तद्विधिवाक्यपाठाभावाद्, वाक्याऽर्थज्ञानं व्याकरणादिषडङ्गाध्ययनरहितस्य दूरापेतम्। बालक्रीडासु निरन्तरमासक्तस्यानुष्ठाने प्रवृत्तिराशङ्कितुमप्यशक्या। तस्मान्नायं विधिः प्रवर्तकः। ननु पित्राचार्यादिभिः शिक्षितो माणवकः क्रीडाभ्य उपरतः पित्रादिमुखादेव यथोक्तवाक्यार्थमवगत्याध्ययने प्रवर्तिष्यत इति चेत्? एवं तर्हि पित्राचार्यादिकर्तृकाऽध्यापनप्रयुक्तं माणवकाध्ययनं, न त्वध्ययनविधिप्रयुक्तमित्येतादृशमस्मदीयमेव मतं भवताऽप्यङ्गीकर्तव्यम्। अध्यापनस्य तु विधिरेवमाम्नायते—'अष्टवर्षं ब्राह्मणमुपनयीत' इति। ननु पूर्वोक्ताध्ययनविधाविवैतस्मिन्नध्यापनविधावपि योग्योऽधिकारी साक्षान्न श्रूयते। ततोऽध्ययनसिद्धौ तत्प्रयुक्तिरप्यध्ययनस्य दुर्लभेति चेत्? मैवम्। उपनयीतेत्येतेनात्मनेपदेनाचार्यत्वकामस्याधिकारिणः प्रतीयमानत्वात्। संमानोत्सञ्जनाचार्यकरणेत्यादिना सूत्रेणाऽऽचार्यकरणविवक्षायां, नयतिधातोरात्मनेपदं विहितम्। एवमप्युपनयन एवाधिकारिसिद्धिर्न त्वध्यापन इति चेत्? मैवम्। उपनयीत तमध्यापयीतेत्युपनयनाध्ययनयोरेकप्रयोगत्वावगमात्। अयमेवाऽर्थो मनुना स्मर्यते—

उपनीय गुरुः शिष्यं वेदमध्यापयेन्नरः ।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ।। ( मनु०: २।१४० )

आचार्यत्वकामेन पित्रादिनाऽनुष्ठेयम् अध्यापनं माणवककर्तृकाध्ययन-व्यतिरेकेण न सिध्यति । पाचयति याजयतीत्यादौ सर्वत्र धात्वर्थव्यतिरेकेण णिच्प्रत्ययार्थादर्शनात् । अतः पित्रादिभिरनुष्ठेयमध्यापनं माणवकाध्ययनस्य प्रयोजकम् । एवं तर्हि, 'स्वाध्यायोऽध्येतव्यः' इत्यस्य विधेः का गतिरिति चेत् ? ब्रह्मयज्ञाध्ययनमनेन विधीयते इति ब्रूमः । अत एव, तैत्तिरीयब्रह्मयज्ञेन यक्ष्यमाणः प्राच्यां दिशि ग्रामादित्यारभ्य तस्मिन्नेव प्रकरणे स्वाध्यायस्य महिमानम्—अपहतपाप्मा स्वाध्याय इत्यादिना बहुधा प्रपञ्च्य तस्मादेवमामनन्ति, तस्मात् स्वाध्यायोऽध्येतव्यः, यं यं क्रतुमधीते तेन तेनास्येष्टं भवतीति । तस्मादध्यापनविधिप्रयुक्तं माणवकाध्ययनमित्येवं प्रभाकरमतम् ।

**पूर्वोक्तस्य प्रभाकर-मतस्य समीक्षा**

अत्रोच्यते । नित्यस्य ग्रहणाध्ययनस्य काम्येनाध्यापनेन प्रयोज्यत्वं न संभवति । ग्रहणाध्ययनस्य नित्यत्वमकरणे प्रत्यवायस्मरणादवगन्तव्यम् । तथा च स्मर्यते—

योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ।। (म० स्मृ० २।१६८)

अध्यापनं तु कुटुम्बपोषणाय गुरुदक्षिणाकामेनानुष्ठीयत इति तस्य काम्यत्वम् । एतदपि स्मर्यते—

षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका ।
याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः ।। (म० स्मृ० १०।७६)

यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहेषु षट्सु कर्मसु यजनाध्ययनदानानि त्रीण्यदृष्टार्थानि । याजनादीनि तु त्रीणि जीवनार्थानि, न त्वदृष्टार्थानि । यस्तु गुरुदक्षिणामनपेक्ष्य माणवकान् अध्यापयति तस्याध्यापनं विद्यादानरूपत्वाददृष्टार्थमस्तु । न चैतावता एतस्य निषिद्धत्वात् सिध्यति । दानस्य धनवस्त्रादिना सम्पादयितुं शक्यत्वात् । इत्थमनित्यमध्यापनं यदा पित्रादयो तानुतिष्ठन्ति तदा नित्यमध्यापनप्रयुक्तं माणवकस्याध्ययनं न निष्पद्येत । तस्मान्नित्यं ग्रहणाध्ययनं स्वविधिप्रयुक्तमेवेत्यवगन्तव्यम् । ननु स्वाध्यायोऽध्येतव्य इत्यस्य वेदब्रह्मयज्ञविषयत्वाद् ग्रहणाध्ययनस्वविधिर्न लभ्यते इति चेत् ? बाढम् । अत एव प्रकाशात्माचार्यैर्विवरणग्रन्थे तमध्यापयीतेत्यस्य माणवकाध्ययनविधिपरत्वमुक्तम् । अत्र अध्यापयीतेति पदे, धात्वर्थो, णिच्प्रत्ययार्थो, विधायकविभक्त्यर्थश्चेति त्रयोऽर्थाः प्रतिपाद्यन्ते । तेषु णिच्प्रत्ययार्थस्य जीवनकामनयैव प्राप्तत्वान्नाऽसौ विधेयः । अतः प्राप्तं तमनूद्य धात्वर्थोऽप्राप्तोऽस्मिन् वाक्ये विधी-

यते । यथा, अग्निहोत्रं जुहोतीति होमं विधाय, दध्ना तु जुहोतीति वाक्ये प्राप्तहोमाऽनुवादेनाऽप्राप्तो दधिगुणो विहितस्तद्वत् । तस्मान्माणवककर्तृकाध्ययनविधिपरमेतद्वाक्यम् । तच्च तदर्थवाचकत्वं योऽष्टवर्षो ब्राह्मणमुपगच्छेत, सोऽधीयीतेत्येवं परिणेतव्यम् । किञ्च सर्वासु स्मृतिषु ब्रह्मचारिप्रकरणेऽध्ययनविधेर्दृष्टत्वात् तन्मूलभूतासु श्रुतिषु विद्यते एवाध्ययनविधिरित्यनुमीयते । तस्मात् स्वविधिप्रयुक्तमध्ययनम् । तत्र माणवकस्याप्रबुद्धत्वेऽपि पित्रादिशिक्षया तदनुष्ठानं सिध्यति । यथा वेदाध्ययनात् प्रागेव पित्रादिशिक्षया सन्ध्यावन्दनसमिदाहरणाद्यनुष्ठानसिद्धिस्तद्वत् । तस्मात् स्वाध्यायोऽध्येतव्य इत्ययमेव विधिः कण्वशिष्यान् स्वशाखाविशेषाऽध्ययने प्रवर्तयतीति सिद्धम् ।

**स्वाध्यायाध्ययनस्य दृष्टार्थादृष्टार्थत्वे शाङ्करदर्शनानुसारिमतम्**

इदमपरञ्चिन्त्यते । किमेतदध्ययनमदृष्टार्थमुत दृष्टार्थमिति ? तत्र इष्टाऽर्थेष्वाहारनिद्रादिषु वैदिकविध्यदर्शनाद् वेदेन विहितस्याऽध्ययनस्य सन्ध्यावन्दनादिवददृष्टार्थत्वं युक्तम् । 'स्वर्गकामा ज्योतिष्टोमेन यजेत' इत्यादिष्विवैतत्कामाऽधीयीतेत्येवमदृष्टसाध्यफलविशेषो न श्रूयत इति चेत् ? न हि अध्ययनत्वसाम्येन ब्रह्मयज्ञाध्ययने श्रूयमाणं घृतकुल्यादिफलमत्रातिदिश्यताम् । ब्रह्मयज्ञप्रकरणे ह्येवं श्रूयते—'यदृचोऽधीते पयसः कुल्या अस्य पितॄन् स्वधा अभिवहन्ति यद्यजूंषि घृतकुल्या, यत् सामानि सोम एभ्यः पवते, यदथर्वाङ्गिरसो मधोः कुल्या' ( तै० आ० २।१० ) इति । तदेतद् ब्रह्मयज्ञफलं ग्रहणाध्ययनेऽतिदेष्टव्यम् । न चादृष्टचरोऽतिदेश इति वाच्यम् । जैमिनीययोः सप्तमाष्टमाध्याययोरतिदेशस्यैव बहुधा विस्तृतत्वात् । तत्र कर्माङ्गानामेवातिदेशो निरूपितः । घृतकुल्यादिवाक्यं न तु कर्माङ्गावबोधकं किं तु फलकथनेन स्तावकोऽर्थवादः । ईदृशस्यातिदेशो न क्वापि दृष्ट इति चेत् ? मैवम् । वैयासिके गुणोपसंहारपादे, 'हानौ तूपायनशब्दशेषत्वात्०' (ब्र०सू० ३।२६) इति सूत्रे तस्य दृष्टत्वात् । तथाहि । कौषीतकिनो ब्रह्मविदा परित्यक्तयोः सुकृतदुष्कृतयोरितरेतरैरनुकूलैः प्रतिकूलैश्च स्वीकारमिष्टमामनन्ति, न त्वितरस्वीकारम् । तदीयं च वाक्यमेतत्—

तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैतीति ।

तत्र भगवान् बादरायणः कौषीतकिशाखायां श्रुतस्येतरस्वीकारस्याथर्वणशाखायामुपसंहारं निर्णीतवान् । सोऽयं फलवाक्यरूपस्याऽर्थवादस्यातिदेशः । तद्वद् घृतकुल्यादिकमतिदिश्यताम् ।

अथवा विश्वजिन्न्यायेन स्वर्गो ग्रहणाध्ययनफलत्वेन कल्पनीयः । तथाहि, 'विश्वजिता यजेत्' इति यागविधिरेवाम्नातो न तत्र फलविशेषः । तथा

सत्यधिकार्यभावादननुष्ठाने प्राप्ते तत्समाधानं भगवान् जैमिनिरसूत्रयत्—'स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात्'[1] ( जै० सू० ४।३।१५ ) इति। अस्यार्थः—अधिकारहेतुत्वेन योऽयं फलविशेषोऽपेक्षितः सोऽयं स्वर्गोऽत्र भवेत्। कुतः ? फलकामिनः सर्वान् पुरुषान् प्रति स्वर्गाख्यफलस्य साधारणत्वादिति। स्वर्गो नाम सुखातिशयः। तथा च

दुःखेन यन्न संभिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं च सुखं स्वर्गपदाभिधम्॥

अतोऽत्रापि अनेनैव न्यायेन माणवकाध्ययनस्य स्वर्गः फलमित्यदृष्टार्थमध्ययनमिति प्राप्ते, ब्रूमः—दृष्टफलसम्भवे सत्यदृष्टकल्पनमन्याय्यम्। अन्यथा, व्रीहीनवहन्तीत्यत्रापि तण्डुलनिष्पत्तिलक्षणं दृष्टफलं बहुप्रयाससाध्यत्वादुपेक्ष्य सकृन्मुसलप्रहाररूपप्रयासरहितमवघातम् अदृष्टार्थं पुरुषोऽनुतिष्ठेत्। तथा सति शास्त्रीयतण्डुलाभावेन पुरोडाशासिद्धौ यागविधयो बाध्येरन। तस्माद् दृष्टफलसम्भवे तदेवादरणीयम्। सम्भवति ह्यध्ययनस्याक्षरप्राप्तिरूपं दृष्टफलम्। नन्वक्षरप्राप्तिरूपं दृष्टफलं गुरुपूर्वकाध्ययनव्यतिरेकेण लिखितपाठेनापि लभ्यते। आयुर्वेदादिमन्त्रपाठेषु तथा दर्शनात्। तथा सति किमनेनाध्ययनविधिनेति चेत् ? उच्यते। नियमादृष्टार्थोऽयमध्ययनविधिः। यथा तण्डुलनिष्पत्तिरूपस्य दृष्टफलस्य विक्रियनखविदलनादिनापि सिद्धौ नियमादृष्टार्थोऽवघातविधिस्तद्वत्। तस्मादक्षरप्राप्तिः प्रत्यक्षोऽध्ययनविधिरिति सिद्धम्॥

एतद्विषये भट्टगुरुमतयोरुपन्यासः

तदिदं शाङ्करदर्शनाऽनुसारिणं मतमसहमानौ भट्टगुरू मन्येते। भवत्यध्ययनस्याक्षरप्राप्तिः फलं, तथापि भवतामपि विधिर्न पर्यवस्यति। किन्तु प्राप्तैरक्षरैर्योऽयमर्थाऽवबोधस्तस्मिन् विधिः पर्यवस्यति। अर्थावबोधेनानुष्ठाने निष्पन्ने सति पुरुषार्थस्याग्निहोत्रादिफलस्य स्वर्गस्य सिद्धेः। अक्षरप्राप्तिमात्रेण तु न अग्निहोत्राद्यनुष्ठानफलं सिध्यति। तस्मात् फलवदर्थावबोधेऽध्ययनविधेः पर्यवसानमवगन्तव्यम्। यद्यपि विहितस्वाध्यायाध्ययनमात्रादीदानीन्तनेषु सर्वेष्वध्यापकेषु अर्थावबोधो न दृष्टस्तथापि निगमनिरुक्तव्याकरणाद्यङ्गपरिशीलनवत्सु दृष्ट एवर्थावबोधः। व्याकरणादिपरिशीलनमात्रेणार्थप्रतीतिमात्रे सत्यपि तन्निर्णयो न लभ्यते।

---

१. तथा च तत्रत्यं शबरभाष्यम्—एवं जातीयकेषु एतत् समधिगतम्, एकं फलमिति। इदमिदानीं सन्दिह्यते—किं यत् किञ्चित् उत स्वर्ग इति। यत् किंचिदिति प्राप्तं विशेषानभिधानात्। तत उच्यते स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात्। सर्वे हि पुरुषाः स्वर्गकामाः। कुत एतत्? प्रीतिर्हि स्वर्गः। सर्वश्च प्रीतिं प्रार्थयते। किमतो यद्येवम्। अविशेषवचनः शब्दो न विशेषे व्यवस्थापितो भविष्यति। यजेत कुर्यादिति। तस्मात् स्वर्गफलमेवंजातीयकमिति।

अक्ताः शर्करा उपदधातीत्यादिवाक्येषु केन द्रव्येणाऽक्ता इत्यादेः संदेहस्यानपगमादिति चेत् । एवं तर्हि निर्णायकं मीमांसाशास्त्रमनेनाध्ययनविधिनार्थनिर्णयाय स्वीक्रियताम् । यथाऽवघातविधिस्तण्डुलनिष्पत्तिफलसिध्यर्थोऽवघातस्यावृत्तिं स्वीकरोति तद्वत् । तस्मात् फलवदर्थावबोधे पर्यवस्यत्ययमध्ययनविधिर्न त्वक्षरप्राप्तिमात्र इति प्राप्ते ब्रूमः—

किमयमर्थावबोधः स्वयमेव पुरुषार्थस्य स्वर्गहेतुः ? उताऽग्निहोत्राद्यनुष्ठानद्वारेण । नाऽऽद्यः । अनुष्ठानवैयर्थ्यप्रसङ्गात् । द्वितीये तु यथार्थावबोधस्यानुष्ठानहेतोः परम्परया पुरुषार्थहेतुत्वम् । एवमर्थावबोधहेतुभूताया अक्षरप्राप्तेरपि परम्परया पुरुषार्थहेतुत्वाद्विधिरक्षरप्राप्तौ पर्यवस्यतु । किञ्चानुष्ठानद्वारस्वर्गफलोपेतेऽर्थावबोधे विधिपर्यवसानं वदतः कृत्स्नवेदाध्ययनं न सिध्येत् । राजसूयाऽश्वमेधादावनधिकारिणो ब्राह्मणस्य तत्फलत्वपर्यन्तार्थावबोधासंभवात् । अक्षरप्राप्तिफलवादिनस्तु कृत्स्नवेदाध्ययनं सिध्यति । अक्षरप्राप्तिर्ब्रह्मयज्ञे जपहेतुत्वात् । तत्र ब्राह्मणोऽपि राजसूयाश्वमेधादिवेदविभागे भागोत्तरब्रह्मयज्ञजपं करोत्येव । विधेरर्थावबोधपर्यन्तत्वाऽभावे कथमर्थावबोधसिद्धिरिति चेत् ? काव्यनाटकादिग्रन्थेषु वैदिकविधिमन्तरेण यथा अर्थावबोधस्तद्वद् भविष्यति । विध्यर्थाभावेऽर्थावबोधप्रयुक्तमदृष्टं किञ्चिदपि न सिध्यतीति चेत् ? मैवम् । अर्थावबोधस्याध्ययनविधिप्रयुक्त्यभावेऽपि विध्यन्तरप्रयुक्तत्वेन तस्यादृष्टस्य सिद्धेः । विध्यन्तरं चैवमाम्नायते—'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' ।

'योऽर्थज्ञ इत्सकलं भद्रमश्नुते ।
नाकमेति ज्ञानविधूतपाप्मा' ॥ ( नि० १।१८ )

तस्मादध्ययनविधिः पाठमात्रपर्यवसायी । अर्थावबोधस्तु विध्यन्तरप्रयुक्त इति सिद्धम् ॥

**वेदस्य विषयविभाग-निरूपणम्** अथेदानीं विहितार्थाववोधसिद्धये काण्ववेदो व्याख्यायते कण्वसंबन्धश्च वेदस्य पूर्वमेव प्रसिद्धः प्रदर्शितः । काण्वसंबन्धिशाखाया वेदत्वं चाऽलौकिकपुरुषार्थोपायवेदनहेतुत्वादवगन्तव्यम् । तथा चोक्तं—

प्रत्यक्षेणाऽनुमित्या वा यस्तूपायो न बुद्ध्यते ।
एतं वदन्ति वेदेन तस्माद् वेदस्य वेदता ॥

तस्मिंश्च वेदे द्वौ काण्डौ-कर्मकाण्डो, ब्रह्मकाण्डश्च । बृहदारण्यकाऽऽख्यो ग्रन्थो ब्रह्मकाण्डस्तद्व्यतिरिक्तं शतपथब्राह्मणं संहिता चेत्यनयोर्ग्रन्थयो कर्मकाण्डत्वम् । तत्रोभयत्राधानाग्निहोत्रदर्शपूर्णमासादिकर्मण एव प्रतिपाद्यत्वात् । बृहदारण्यके तु तृतीयाद्यध्यायेषु ब्रह्म प्रतिपाद्यते । अतः कर्माणि

वेदस्य विषयः तदवबोधः प्रयोजनम् । बोधार्थी चाधिकारी । तत्र प्रयोजनं विषयेण जन्यते । अधिकारिविषयोस्तु प्रयोजनद्वारेणोपकार्योपकारकत्वसंबन्धः । इत्थं विषयप्रयोजनाधिकारिसंबन्धरूपस्याऽनुबन्धचतुष्टस्य विद्यमानत्वात् तदीयप्रामाण्यस्य जैमिनिना प्रथमपादे प्रपञ्चितत्वाच्च वेदो व्याख्यातुं योग्यः ।

**कर्मकाण्डस्य व्याख्यानप्राथम्ये योग्यत्वविचारः**

तस्मिंश्च वेदे कर्मकाण्डः प्रथममाम्नातः । यद्यपि ब्रह्मणोऽभ्यर्हितत्वाद् ब्रह्मकाण्डस्यैव प्राथम्यमुचितम् । तथापि कर्मभिः साध्यां चित्तशुद्धिमन्तरेण पुरुषस्य ब्रह्मकाण्डेऽधिकाराभावादधिकारहेतुकर्मप्रतिपादकः काण्डः प्रथमं समाम्नातः । कर्माणि च चतुर्विधानि । नित्यं, नैमित्तिकं, काम्यं, निषिद्धं चेति । तत्र नित्यनैमित्तिकयोरननुष्ठानान्निषिद्धसेवनाच्च प्रत्यवाय उत्पद्यते । तथा च याज्ञवल्क्यः स्मरति––

विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् ।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥ (या०स्मृ०३।२१९)

तेन च प्रत्यवायेन बुद्धिमान्द्ये सति नित्यानित्यवस्तुविवेकवैराग्यादीनामनुदयात् ब्रह्मविविदिषा पुरुषस्य न जायते । तस्माद् विविदिषाहेतुत्वं नित्यनैमित्तिककर्मणां बृहदारण्यके समामनन्ति––

तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति ।
यज्ञेन दानेन तपसाऽनाशकेन ॥

तदनुष्ठानेन तमोगुणरूपे चित्तमालिन्य अपगते सति सत्त्वगुणरूपस्य नैर्मल्यस्योदयाद् विवेकवैराग्यादिसंपत्तौ सत्यां परमपुरुषार्थरूपे ब्रह्मतत्त्ववेदनेऽभिरुचिर्जायते । 'कारीर्या वृष्टिकामो यजेत्', 'चित्रया पशुकामः' इत्यादीनि तु काम्यकर्माणि परमपुरुषार्थसाधनाऽभावेऽपि स्वाभाविककामग्रस्तानां पुरुषाणां वैदिकमार्गे फलसंवादेन श्रद्धामुत्पादयितुमेवाम्नायन्ते । तस्मात् तानि वेदे प्रासङ्गिकानि । परमतात्पर्यं तु वेदस्य नित्यकर्मस्वेव । तस्मात् कर्मकाण्डगतयोः संहिताशतपथग्रन्थयोः प्राधान्येन नित्यकर्माण्याम्नातानि ।

**यजुर्वेदस्याध्यायगता विषयाः**

तत्र शतपथब्राह्मणस्य मन्त्रव्याख्यानरूपत्वाद् व्याख्येयमन्त्रप्रतिपादकः संहिताग्रन्थः पूर्वभावित्वात् प्रथमो भवति । तस्मिंश्च संहिताग्रन्थे चत्वारिंशदध्यायाः । तेषु प्रथमद्वितीययोरध्याययोर्दर्शपूर्णमासौ । तृतीयेऽन्वाधानाः होत्राग्न्युपस्थानचातुर्मास्यानि । चतुर्थपञ्चमषष्ठसप्तमाष्टमनवमेषु षट्स्वग्निष्टोमः । दशमे वाजपेयः । एकादशे राजसूयः । द्वादशमारभ्य विंशान्तेषु नवस्वग्निचयनम् । एकविंशद्द्वाविंशत्त्रयोविंशेषु त्रिषु सौत्रामणी । चतुर्विंशपञ्चविंशषड्विंशसप्त-

विंशेषु चतुर्ष्वश्वमेधः । अष्टाविंशमारभ्य त्र्यस्त्रिंशान्तेषु षट्सु तत्र तत्र विप्रकीर्णा लिङ्गविनियोज्या अनारभ्याधीता मन्त्राः । चतुस्त्रिंशपञ्चत्रिंशयोः पुरुषमेधः । षट्त्रिंशे शान्तिः । सप्तत्रिंशाष्टत्रिंशैकोनचत्वारिंशेषु प्रवर्ग्यः । चत्वारिंशे च ब्रह्मविद्या ।

**संहितारम्भे दर्शपूर्णमासेष्टिनिरूपणस्य औचित्यविचारः** ननु संहिताया आदौ कर्मान्तरं परित्यज्य दर्शपूर्णमासेष्टिरेव कुतः प्रतिपाद्यत इति चेत् ? प्रकृतित्वान्निरपेक्षत्वाच्चेति ब्रूमः । प्रकर्षेणाऽङ्गोपदेशो यत्र क्रियते सा प्रकृतिः । कृत्स्नाङ्गविषयत्वमुपदेशस्य प्रकर्षः । विकृतिषु तु विशेषाङ्गमात्रस्योपदेशः क्रियते । अङ्गान्तराणि तु प्रकृतेरतिदिश्यन्ते । अतः उपदेशस्य प्रकर्षाभावः । प्रकृतिस्त्रिविधा—अग्निहोत्रम्, इष्टिः, सोमश्चेति । त्रिष्वप्येतेष्वन्यनैरपेक्ष्येण स्वाङ्गजातं सर्वमुपदिष्टम । तत्र सोमयागस्य स्वरूपेणान्यनैरपेक्ष्येष्वप्यङ्गेषु दीक्षणीयादिषु दर्शपौर्णमासेष्टिसापेक्षत्वाद् न पूर्वभावित्वं युक्तम् । इष्टेस्तु सोमयागनैरपेक्ष्यात् सोमात् प्राचीनत्वं युक्तम् । यद्यप्यग्निहोत्रस्य स्वरूपाङ्गेषु नास्त्यन्यापेक्षा, तथाप्यग्निसिद्धचपेक्षत्वाद् आहवनीयाद्यग्नीनां च पवमानेष्टिसाध्यत्वात् पवमानेष्टीनां च दर्शपूर्णमासविकृतित्वात् परम्परयाग्निहोत्रस्य दर्शपूर्णमासापेक्षाऽस्तीति प्रथमभावित्वं युक्तम् । दर्शपूर्णमासयोरग्निसाध्यत्वादग्निसाधकमाधानं प्रथमतो वक्तव्यमिति चेद् ? मैवम् । नाधानमात्रेणाग्नयः सिध्यन्ति किन्तु पवमानेष्टिभिरपि । ताश्चेष्टयो दर्शपूर्णमासविकृतित्वात् साक्षादेव दर्शपूर्णमासावपेक्षन्ते । दर्शपूर्णमासौ त्वग्निद्वारा पवमानेष्टिसापेक्षावपि न साक्षात् पवमानेष्टोरपेक्षेते । अतो निरपेक्षत्वाद् दर्शपूर्णमासेष्टिरेव प्रथमं वक्तव्या । ऋग्वेदसामवेदयोरादौ दर्शपूर्णमासेष्टिर्नाम्नातेति चेत् ? बाढम् । यजुर्वेदमपेक्ष्य दर्शपूर्णमासयोरादित्वमुक्तम् । कर्मकाण्डविषये यजुर्वेदस्य प्राधान्यात् । आनुपूर्व्या कर्मणां स्वरूपं यजुर्वेदे समाम्नातम् । तत्र तत्र विशेषापेक्षायामपेक्षिता याज्यापुरोनुवाक्यादय ऋग्वेदे समाम्नायन्ते । स्तोत्रादीनि तु सामवेदे । तथा सति भित्तिस्थानीयो यजुर्वेदः; चित्रस्थानीयावितरौ । तस्मात् कर्मसु यजुर्वेदस्य प्राधान्यम् । तस्मिश्च दर्शपूर्णमासेष्टिरादौ समाम्नाता तस्यां चेष्टौ, इषे त्वादयो मन्त्राः ।

**मन्त्रस्य सामान्यलक्षणनिरूपणम्** तेषां च मन्त्राणां सामान्यलक्षणं न्यायविस्तराभिधे ग्रन्थे द्वितीयाऽध्याये प्रथमपादे द्वाभ्यामधिकरणाभ्यामित्थं विचारितम्—

> 'अहे बुध्निय मन्त्रं मे' इति मन्त्रस्य लक्षणम् ।
> नास्त्यस्ति वाऽस्य नास्त्येतदव्याप्त्यादेरवारणात् ॥

याज्ञिकानां समाख्यानं लक्षणं दोषवर्जितम् ।
तेऽनुष्ठानस्मारकादौ मन्त्रशब्दं प्रयुञ्जते ।।

आधानप्रकरण इदमाम्नायते—'अहे बुध्निय मन्त्रं मे गोपाय' ( तै० ब्रा० १।२।१।२६ ) इति । तत्र मन्त्रस्य लक्षणं नास्ति, कुतः ? अव्याप्त्यतिव्याप्त्योर्वारयितुमशक्यत्वात् । 'विहितार्थस्याभिधायको मन्त्रः' इत्युक्ते, 'वसन्ताय कपिञ्जलानालभते०' (वा० सं० २४।२०) इत्यस्य मन्त्रस्य विधिरूपत्वादव्याप्तिः । 'मननहेतुर्मन्त्रः' इत्युक्ते, ब्राह्मणेऽतिव्याप्तिरिति चेत् ? मैवम् । याज्ञिकसमाख्यानस्य निर्दोषलक्षणत्वात् । तच्च समाख्यानमनुष्ठानस्मारकादीनां मन्त्रत्वं गमयति । 'उरु प्रथस्व' इत्यादयोऽनुष्ठानस्मारकाः । 'अग्निमीले पुरोहितम्' ( ऋ० १।१।१ ) इत्यादयः स्तुतिरूपाः । 'इषे त्वा' (वा० सं० १।१) इत्यादयः शाखाच्छेदनादिस्मारकाः । 'अग्न आयाहि वीतये' ( सा० सं० १।१ ) इत्यादय आमन्त्रणोपेताः । एवमन्येऽप्युदाहार्याः । ईदृशेष्वत्यन्तविजातीयेषु समाख्यानमन्तरेण नान्यः कश्चिदनुगतो धर्मोऽस्ति यस्य लक्षणमुच्यते । तस्मात् समाख्यानं मन्त्रलक्षणम् ।। ( जै० न्या० वि० २।१।७ )

**ऋगादीनां त्रिविधानां मन्त्राणां विशिष्टलक्षणनिर्देश-**

ऋगादिलक्षणं पूर्वोत्तरपक्षावाह—
न ऋक्सामयजुषां लक्ष्म साङ्कर्यादिति शङ्किते ।
पादश्च गीतिः प्रश्लिष्टपाठ इत्यस्त्वसङ्करः ।

इदमाम्नायते—'अहे बुध्निय मन्त्रं मे गोपाय यमृषयस्त्रैविदो विदुः ऋचः सामानि यजूंषि' इति । त्रीन् वेदान् विदन्तीति त्रिविदाः । त्रिविदां सम्बन्धिनोऽध्येतारस्त्रैविदाः । ते च यं मन्त्रभागमृगादिरूपेण त्रिविधं वदन्ति तं गोपायेति योजना । त्रिविधानाम् ऋक्सामयजुषां व्यवस्थितं लक्षणं नास्ति । कुतः साङ्कर्यस्य दुष्परिहरत्वात् । 'अध्यापकप्रसिद्धेष्वृग्वेदादिषु पठितो मन्त्र ऋगादिरूपः' इति हि वक्तव्यम् । तच्च सङ्कीर्णम् । तथाहि । अग्नये मथ्यमानायानुब्रू३हि, हविर्धानाभ्यां प्रोह्यमाणाभ्यामनुब्रू३हि इत्यादीनि यजूंष्यृग्वेदे समाम्नातानि । 'देवो वः सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः' ( तै० सं० १।१।५।१ ) इत्ययं मन्त्रो यजुर्वेदे सम्प्रतिपन्नयजुषां मध्ये पठितः । न च तस्य यजुष्ट्वमस्ति । ऋग्रूपत्वेन तद्ब्राह्मणे व्यवहृतत्वात् । सावित्र्यर्चेति हि ब्राह्मणम् । 'एतत् साम गायन्नास्ते' इति हि प्रतिज्ञाय, हाउ इत्यादिकं साम यजुर्वेदे गीतम् । 'अक्षितमस्यच्युतमसि प्राणसंसितमसि' इति त्रीणि यजूंषि सामवेदे ( छा० उ० ३।१७।६ ) समाम्नायन्ते । तस्मान्नास्ति लक्षणमिति चेत् ? न, पादादीनामसङ्कीर्णलक्षणत्वात् । पादेनार्द्धर्चेनोपेता वृत्त-

बद्धा मन्त्रा ऋचः। गीतिरूपा मन्त्रा सामानि। वृत्तगीतिवर्जितत्वेन प्रश्लिष्टपठिता मन्त्रा यजूंषि इति व्यवस्थितं लक्षणम्। (जै० न्या० वि० २।१।१२)॥

मन्त्राणामनुष्ठेयार्थस्मारकत्वप्रतिपादनम्

प्रथमाध्यायस्य द्वितीयपादे मन्त्रेष्वन्यद्विचारितम्——

"मन्त्रा उरु प्रथस्वेति किमदृष्टैकहेतवः।
यागे कृतपुरोडाशप्रथनादेश्च भासकाः॥
ब्राह्मणेनापि तद्भानान्मन्त्राः पुण्यैकहेतवः।
न तद्भानस्य दृष्टत्वाद् दृष्टं वरमदृष्टतः॥

'उरु प्रथस्व' इत्ययं कश्चिन्मन्त्रः। तस्याऽयमर्थः—भो पुरोडाश त्वमुरु विपुलता यथा भवति तथा कपालेषु प्रसर इति हीदृशा मन्त्रा यागप्रयोगेषूच्चार्यमाणा अदृष्टमेव जनयन्ति, न त्वर्थप्रकाशनाय तदुच्चारणम्। पुरोडाशप्रथनलक्षणार्थस्य ब्राह्मणवाक्येनापि भासमानत्वात्। 'उरु प्रथस्वेति पुरोडाशं प्रथयति' इति हि ब्राह्मणवाक्यमिति चेत्? न एतद्युक्तम्। अर्थप्रत्यायनस्य दृष्टप्रयोजनस्य सम्भवे सति केवलादृष्टस्य कल्पयितुमशक्यत्वात्। तस्माद् दृष्टमर्थानुस्मरणमेव यागप्रयोगे मन्त्रोच्चारणस्य प्रयोजनम्। ब्राह्मणवाक्येनाप्यर्थानुस्मरणसम्भवे मन्त्रेणैवानुस्मरणीयमिति यो नियमस्तस्यादृष्टं प्रयोजनमस्तु" (जै० न्या० वि० १।२।४)।

ननु मन्त्राणामनुष्ठेयार्थस्मारकत्वं क्वचिद् व्यभिचरितम्। तथाहि——

दिवो वा विष्ण उत वा पृथिव्या महो वा विष्णवुत वाऽन्तरिक्षात्।
हस्तौ पृणस्व बहुभिर्वसुभिराप्रयच्छ दक्षिणादोत सव्यात्।

इत्यस्मिन् मन्त्रे धनमाशास्ते इत्ययमर्थः प्रतीयते धनुष्ठेयार्थस्तु शकटविशेषस्थापनायाऽऽधारभूतकाष्ठस्थापनं, तत्तु ब्राह्मणे न विधीयते। 'दिवो वा विष्ण उत वा पृथिव्या' इत्याशीरेतयर्चा दक्षिणस्य हविर्धानस्य मेढीं निहन्तीति। नाऽयं दोषः। अस्याधिकरणस्य लिङ्गविनियोगविषयत्वात्। उदाहृतस्तु मन्त्रः श्रुत्या विनियुज्यते।

मन्त्रार्थज्ञाने ऋषिच्छन्दोदेवतानामावश्यकं वेदनम्

य एतेऽर्थस्मरणाय प्रयोक्तव्या मन्त्राः सन्ति, तेषु सर्वेष्वृष्यादिकं वेदितव्यम्। अत एव छन्दोगा ऋष्याद्यवेदने बाधमभिधाय तद्वेदनविधिमामनन्ति——'यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन याजयति वाऽध्यापयति वा स्थाणुं वर्च्छति गर्तं वा पद्यते' इत्यादिरवेदने बाधः। तस्मादेतानि मन्त्रे विद्यादिति वेदनविधिः।

तथा कात्यायनाऽऽचार्योऽप्याह——'एतान्यविदित्वा योऽधीतेऽनूते जपति यजते याजयते तस्य ब्रह्म निर्वीर्यं यातयामं भवति। अथ विज्ञायैतानि योऽधीते तस्य वीर्यवद्, अथ योऽर्थवित् तस्य वीर्यवत्तरं भवति

जपित्वा हुत्वेष्टवा तत्फलेन युज्यते' इति । अस्यास्तु मन्त्रब्राह्मणात्मिकायाः काण्वशाखायाः सर्वस्या अपि स्वयम्भुब्रह्मारभ्य पौतिशाखापर्यन्ताः सम्प्रदायप्रवर्तका ऋषयस्त्रिषु वंशब्राह्मणेषु मन्त्रविशेषेषु स्पष्टमाम्नाताः । काण्डविशेषेषु मन्त्रविशेषेषु चाऽपेक्षितास्तत्तदृषिविशेषा ब्राह्मणगताख्यायिकाभिरनुक्रमणिकादिग्रन्थैश्चावगन्तव्याः । तदज्ञानेऽपि वंशोक्तानामृषीणामवगतत्वादवेदनप्रयुक्तो बाधो नास्ति । ऋषिविशेषाणामपि विज्ञाने फलाधिक्यमस्ति । अत एव वीर्यवत्तरं भवतीति कात्यायनवाक्यं पूर्वमुदाहृतम् । छन्दस्तु मन्त्राणाम् इषे त्वादीनामनियताक्षरत्वान्नास्त्येव । ये तु यजुषामपि छन्द इच्छन्ति, तैः कात्यायनोक्तसर्वानुक्रमणिकायां पञ्चमाऽध्यायमभ्यस्य तद्द्वारेण तत्तन्मत्रच्छन्दोऽनुसन्धेयम् । देवता तु मन्त्रप्रतिपाद्या । सा च मन्त्रलिङ्गादवगन्तव्या । येषु मन्त्रेष्वग्नीन्द्रादयश्चेतनाः प्रतिपाद्यन्ते । तेष्वग्न्यादीनां देवतात्वं विस्पष्टम् । येषु तु मन्त्रेषु पलाशशाखाबर्हिर्जुह्वादयोऽचेतनाः प्रतिपाद्यन्ते तेष्वपि शाखादिशब्दाभिधेयाः तत्तद्द्रव्याभिमानिनश्चेतना देवता अवगन्तव्या, । अत एव भगवान् बादरायणो मृदब्रवीदापोऽब्रुवन्नित्यादिष्वचेतनद्रव्येषु चेतनोचितव्यापारमुपपादयितुम्, 'अभिमानिव्यपदेशस्तु०[1]' ( वे० २।१।५ ) सूत्रयामास । एवञ्च सति, इषे त्वादीनां मन्त्राणाम् ऋषिच्छन्दोदेवता यथोक्तनीत्या सुबोधाः । तस्माद् ग्रन्थबाहुल्यभीरुभिरस्माभिः प्रतिमन्त्रं नोदाह्रियन्ते । विनियोगज्ञानाय तु प्रतिमन्त्रं कात्यायनसूत्रवाक्यमुदाह्रियते । मन्त्रार्थज्ञानाय काण्वसम्बन्धिब्राह्मणं तत्र यत्र यथासम्भवमुदाहरामः । तदर्थावबोधदार्ढ्याय शाखान्तरविषयमप्याऽऽपस्तम्बसूत्रं, बौधायनसूत्रं तैत्तिरीयब्राह्मणं च क्वचित्क्वचिदुदाहरामः ॥

**दर्शयागात्पूर्वं नियमेन विधेया अनुष्ठानविषयः**

दर्शयागं चिकीर्षुरमावास्यायां प्रातर्नित्याग्निहोत्रं कृत्वा ततो दर्शयागार्थं, 'ममाग्ने वर्च' इत्यादिभिर्मन्त्रैर्वह्निषु समिदाधानरूपमन्वाधानं कृत्वा वत्सापाकरणं कुर्यात् । किमिदं वत्सापाकरणमिति चेत् ? सन्ति दर्शयागे त्रीणि प्रधानहवींषि, आग्नेयोऽष्टाकपालः, ऐन्द्रं दधि, ऐन्द्रं पयः इति । तत्र प्रतिपदि होतुं तस्य दध्नः सम्पादनायाऽमावस्यायां रात्रौ गावो दोग्धव्याः । तद्दोहनार्थं प्रातः काले लौकिकदोहनादूर्ध्वं स्वमातृभिः सह सञ्चरन्तो वत्सा मातृभ्यो अपाकरणीयाः । तदिदं वत्सापाकरणम् । एतच्च कण्वो महर्षिः स्वकीये ब्राह्मणे विधातुमिदं वाक्यं पठति—'स वै पर्णशाखया वत्सानपाकरोति' इति ।

तदेतदुपपादयितुम् अर्थवादे गायत्रीकृतं सोमारोहणमभिधाय तदा-

---

१. अस्य सूत्रस्य शाङ्करभाष्यं सप्तदशपृष्ठे पूर्वमेवोपन्यस्तमस्माभिः । तत्तु जिज्ञासुभिस्तत्रावलोकनीयमिति ।

हरणवेलायां पक्षिरूपाया गायत्र्याः पक्षविशेषः सोमवल्ल्याः पर्णं च भूमावपतत्। तयोरन्यतरत् पर्णनामकः पलाशवृक्षोऽभूत्। अतः सोमसम्बधाद् गायत्रीसम्बन्धाच्च पलाशवृक्षः प्रशस्य इत्यभियीयते। तं विधिमेवमुपसंहरति। वर्णं प्रचिच्छेद गायत्र्या वा सोनस्य वा राज्ञस्तत् पतित्वा पर्णोऽभवत्। तस्मात् पर्णो नाम यत् तत्र किञ्चित् सोमस्य त्यक्तं, तस्मात् पर्णशाखया वत्सानपाकरोतीति।

गायत्र्याः सोमाहरणं, कद्रूश्च वै सुपर्णा चेत्यादौ तैत्तिरीयब्राह्मणगतानुवाके, 'सोमो वै राजा गन्धर्वेष्वासीत् इत्यादौ बहवृचब्राह्मणे च प्रपञ्चितम्। पलाशवृक्षस्य सोमसम्बन्धिपर्णादुत्पन्नत्वेन वृक्षजातिषु ब्राह्मणवृक्षतया प्रशस्तत्वात् तदीयशाखया वत्सापाकरणं तित्तिरिः स्वकीयब्राह्मणेऽपि स्पष्टमित्थमुवाच—'तृतीयस्यामितो दिवि सोम आसीत्। तं गायत्र्याहरत्। तस्य पर्णमुच्छिद्येत्। तस्य पर्णोऽभवत्। तस्य पर्णस्य पर्णत्वम्। ब्रह्म वै पर्णम्। यत् पर्णशाखया वत्सानपाकरोति ब्रह्मणेवैनानपाकरोति' इति। न चाऽत्र सोमवल्ल्याः पत्रमात्रस्य कथं वृक्षस्य सम्पत्तिरिति विस्मेतव्यम्। विधातुरीश्वरस्याऽचिन्त्यशक्तित्वात्। अन्यथा बीजाद् वृक्ष इत्यत्रापि, क्व बीजं, कुत्र वा वृक्ष इत्ययं विस्मयः केन वार्येत। सर्वत्र पर्णेभ्यो वृक्षः प्रसज्ज्येतेत्ययमतिप्रसङ्गोऽपीश्वरसङ्कल्पाभावेन परिहर्तव्यः स च सङ्कल्पः कार्यैकसमधिगम्यः। तस्माद्वेदार्थे कुतर्कैर्न चोदनीयम्। तस्याः पर्णवृक्षशाखायाश्छेदनेन प्रथममन्त्रं कात्यायनः स्वकीयसूत्र इत्थं विनियुङ्क्ते-पर्णशाखां छिनत्ति शामीलीं वेषे त्वेत्यूर्जे त्वेति वा छिनद्मीति वोभयोः साकाङ्क्षत्वात्। सन्नमयामीति वोत्तर इति। अस्याऽयमर्थः—पलाशशाखा शमीशाखा चाऽत्र विकल्पिता। तच्छेदने, इषे त्वेत्यूर्जे त्वेति चैतौ मन्त्रो विकल्पितौ। तयोरुभयोः क्रियापदाकाङ्क्षत्वादर्थावबोधाय छिनद्मीति पदमध्याहर्तव्यम्। सोऽयमेकः पक्षः। इषे त्वेति छेदनाऽर्थो मन्त्रः। ऊर्जे त्वेति सन्नमनाऽर्थो मन्त्रः। सन्नमननृजूकरणम्। तदिदं पक्षान्तरमिति। अत्र बौधायन उभयोर्वाक्ययोरेकमन्त्रत्वमाश्रित्य तं मन्त्रं छेदने विनियुङ्क्ते—'तामाछिनत्तीषे त्वोर्जे त्वेति'। आपस्तम्बस्तु तदभिसन्धाय मन्त्रभेदपक्षमपि कश्चिदाश्रित्य विनियोगभेदमाह—'सन्नयतः पलाशशाखां शमीशाखां वा हरति। इषे त्वोर्जे त्वेति तामाच्छिनत्यपि वेषे त्वेत्याच्छिनत्त्यूर्जे त्वेति संनममत्यनुमार्ष्टि वेति'। सन्नयतः सान्नायनामकं दधिरूपं हविः कुर्वत इत्यर्थः॥

काण्वशिष्यास्तु मन्त्रभेदं विनियोगभेदं चाश्रित्येत्थमामनन्ति—तामाच्छिनत्तीषे त्वेति वृष्टये तदाह यदिषे त्वेत्यूर्जे त्वेत्यनुमार्ष्टि यद्वृष्टया ऊर्क् रसो जायते तस्मा उ एतदाह तस्मादाहोर्जे त्वेतीति॥ अस्यायमर्थः—तां पर्णशाखाम्, इषे त्वेति मन्त्रेणाध्वर्युः साकल्येन छिन्द्यात्। छेदकालेऽध्वर्युः इषे त्वेति यद् वाक्यमाह तद्वाक्यं वृष्टिसिद्धचर्थम्। अधिकेनादरेण सेवते,

ऊर्जे त्वेति मन्त्रेण तां शाखामनुमृज्यात्। अनुमार्जनमानुलोम्येन तस्यां संलग्नधूल्याद्यपनयनम्। यदि प्रभूताया वृष्टेः सकाशाद् व्रीहियवाद्यभिवृद्धि हेतुरूर्जशब्दाऽभिधेयः समीचीनजलात्मको रसो जायते, तदा प्राणिनामुपकारो भवति। तदर्थमेवाऽध्वर्युरेतदाह। किमाहेत्याशङ्क्य, तस्मादाहोर्जे त्वेति वाक्येन तदेव स्पष्टीक्रियते इति। काण्वाभिमत एव मन्त्रभेदपक्षो जैमिनीयैरपि द्वितीयाध्याये प्रथमपादे इत्थं निर्णीतः—

'इषे त्वादिर्मन्त्र एको भिन्नो वैकः क्रियापदे।
असत्यर्थस्मारकत्वादेकाऽदृष्टस्य कल्पना॥
छेदने मार्जने चैतौ विनियुक्तौ क्रियापदे।
अध्याहृते स्मारकत्वान्मन्त्रभेदोऽर्थभेदतः॥'

( जै० न्या वि० २।१।१५ )

'इषे त्वोर्जे त्वा' (वा० सं० १।१) इत्यत्र क्रियापदाभावेन 'उरु प्रथस्व' इति मन्त्रवदर्थस्मारकत्वाभावात्, अदृष्टार्थे सत्येकादृष्टस्य कल्पने लाघवादेक एव मन्त्र इति चेत् मैवम्। काण्वब्राह्मणे छिनत्त्यनुमार्ष्टि इति विनियोगभेदश्रवणात्, तदनुसारेण इषे त्वा छिनद्मि ऊर्जे त्वाऽनुमार्ज्मि इति क्रियापदेऽध्याहृते सति, अर्थद्वयस्मारकत्वाद् भिन्नौ मन्त्रौ इति॥

इति शुक्लयजुर्वेदान्तर्गतकाण्वसंहितायाः सायणकृता
भाष्योपक्रमणिका समाप्ता



# अथर्ववेदसंहितायाः

## सायणाचार्यकृता

## भाष्यभूमिका

